UGC JOURNAL NO-40960

ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४३ वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१८ ई०

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४३ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१८ ई०





प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४३ वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१८ ई०



मुद्रकः - **अमरप्रिंटिंगप्रैसः**, दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- ❖ एषा त्रैमासिकी शोध-पत्रिका।
- ❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- ❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- ❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- ❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- ❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- ❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- ❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- ❖ अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- ❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

"यः पश्यति स पश्यति" वाक्यमिदं नितान्तमौत्कण्ठ्यमुद्भावयति। अत्र कार्यदर्शनवतोऽतिक्रम्य कारणदर्शनसमर्थानां प्राशस्त्यमुपदर्शितम्। प्रत्तं हि ज्ञानं विमलमृषिभिर्जुष्टं चेत् तदेव मोदाय क्षेमाय चाधिकृतमिति सर्वाविरोधिना तर्केणाधिगतमेव विद्याचणैः। तदेव सर्वत्रान्तःप्रविष्टं ब्रह्मतत्त्वं यैः प्रत्यक्कृतं तेषामेव दर्शनं दर्शनमिति मन्यते। लोचनानि लोचनानि इति वदुत्तरपदस्य विशिष्टार्थबोधकत्वेन न हि वाक्यार्थबुद्धौ काचित् विप्रतिपत्तिः।

इदञ्च दर्शनं वेदमप्यनुहरते, तदेव श्रुतिः प्रत्यक्षमुपलभ्यते "तस्य योनिं परिपश्यन्ति धीराः" इति। भगवता पतञ्जलिना महता देवेन विहितसाम्यस्यैव प्राशस्त्यमुपपादितम्। यस्य तूपादानशब्दान्तःप्रविष्टतत्त्वस्य साक्षात्कृतिः नोपजन्यते तस्य तु केवलं निगदप्रत्यक्ष एव विदिमुपैति, तदेव जगाद "निगदेनैव शब्द्यते" इति। शब्दात्मा हि भगवान् विवरप्रसूत्या जीवत्वं वरयते, संवर्त्तात्मना तु शब्दतत्त्वात्मकेन भावेन सकलजगद्भावान् विवर्तयितुमुद्युङ्क्ते। एवङ्गत्या वर्णपदवाक्यसंघटनेन विविधसन्धिमूलकेन स्वकीयमत्यन्तं प्रत्यक्चैतन्यभावमपि तिरोधाय स्थूलरूपेणान्धधियामात्मानमुपस्करोति, तेषां कृत एव अयं शब्दात्मा निगदभावेन प्रत्यग्भवति। ये तु आहितसंस्काराः वर्णपदवाक्यानां निर्मितौ जीवातुं सविवेकं परिपश्यन्तः ते सर्वमप्यौपाधिकं दूरे कृत्वा अनुस्यूतं कारणं वस्तु परिपश्यन्ति त एव पश्यन्ति, मन्येऽहं तदेवाह "यः पश्यति स पश्यति" इति। इदमाश्चर्यं भगवतोऽक्षरब्रह्मणः परिस्पन्दितं स्थूलरूपमपि सर्वेषां योगक्षेमाय प्रगाढमलमिति। तदेवाह –

**पदाङ्गसन्धिपर्वाणं स्वरव्यञ्जनभूषितम्।**
**यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः॥**

तस्यैव सर्वमयत्वमपि वेदानुमोदेन प्रसिद्धमेव, अत एव "भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः" आकलय्यते। स्मृतिरपि जग्राह एनमर्थम् "अहमन्नमन्नाद एव च" इति। तस्मात् स्वानुग्रहेण सर्वोपकारं विधित्सुः परं कारुणिको भगवान् आत्मानं शास्त्ररूपेणावतारयामास। तस्यैव छटाः इतिहासपुराणकाव्यादीनि, किं वा यावान् अपि वाक्प्रसरः तत्सर्वं स एव, तस्मात् सौहार्दसंसक्तेषु कारुण्यनिर्भरेषु शास्त्रेष्वकारणमपि प्ररोचना कर्तव्यैव इत्येवानुशासनम्। तदेवाह "निष्कारणो षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति।

तदेव प्रकृत्येप्यङ्के भगवत्पादस्तोत्रसाहित्येऽद्वैतमतमुपक्रम्य नेत्ररोगविज्ञानपुरस्सरं विविध प्रतिपाद्यकदम्बं संगृह्य अस्याः पत्रिकाया आनुगुण्यं परिकल्पितम्। अस्याः सातत्येन सौष्ठवसमेधनार्थं बाढं प्रकामं वाग्दैवतं समाश्रये।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

## सम्पादकीयम्

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।।** (श्रीमद्भगवद्गीता)

भगवता श्रीकृष्णेन ब्रह्मविद्यायामेभिर्दिव्यवचनपुञ्जैः सन्दिष्टो यल्लोकः तदेवाचरणमाचरति, तदेववचनमनुपालयति, तदेव कार्यमनुकरोति, तामेव च पद्धतिमनुसरति यत्पूर्वं महर्षिभिः महापुरुषैश्च लोकश्रेयसे साधुत्वेन समाचरितम्। उपर्युक्तवचनस्यायमभिप्रायः यदस्माकं जीवने तेषामेव कर्म वचनञ्चाप्तत्वेन प्रमाणितम्भवति येषां जीवनं सदाचरणेन, परोपकारेण, सद्गुणवैभवेन, यमनियमासनप्राणायामप्रत्याहारधारणाध्यानादिना च नितान्तमाप्लावितम्भवेत्। भारतीयजनमानसे श्रेष्ठजनानामनुकरणाय बहून्युपदेशवचनान्याचार्यैः चर्चितानि। यथोक्तं काव्यप्रकाशे- **रामादिवत्प्रवर्तितव्यं न रावणादिवत्।** महाभारतेऽपि शान्तिपर्वणि भगवतो वेदव्यासस्य वचनमिदं प्रकृतमत्यन्तं साधुत्वेन परिष्करोति-

**वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम्।**
**पालने यत्नमातिष्ठ सर्वलोकस्य चैव हि।।**

तत्रैव वनपर्वणि यक्ष-युधिष्ठिरसम्वादप्रसङ्गे वचनमिदं विचारणीयम्-

**श्रुतिर्विभिन्ना स्मृतयोऽपि भिन्ना, नैको मुनिर्यस्य वचः प्रमाणम्।**
**धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः।।**

अपि च, प्रतिमानाटके-

**अनुचरति शशाङ्कं राहुदोषेऽपि तारा, पतति च वनवृक्षे याति भूमिं लता च।**
**त्यजति न करेणुः पङ्कलग्नं गजेन्द्रम्, व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः।।**

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः त्रयोदशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् विद्वांसो मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**
विभागाध्यक्षः
शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर 2018 वर्षः 43, तृतीयाङ्कः

# भगवत्पादीयस्तोत्रसाहित्येऽद्वैततत्त्वविमर्शः

प्रो. रामकिशोरत्रिपाठी*

यो मायावशगः प्रपञ्चरचनां धत्ते स्वलीलान्वितः
सच्चिद्रूपतया विवर्तजगतोऽधिष्ठानतामादधत्।
वेदान्ताधिगतैश्च बोधविभवैर्बन्धक्षये निर्मल-
स्तं वन्देऽद्वयमात्मतत्त्वमखिलाधारं विमोहच्छिदम्।।

अज्ञानेन विसृष्टमोहविततिर्मायाक्षये क्षीयते
शास्त्रं तत्क्षयकारकं रचयते ज्ञानं विमोहापहम्।
ज्ञानं ह्यत्र विशुद्धतत्त्वविषयं तच्चापरोक्षात्मकम्
साक्षाच्छोकमपाकरोति गतमलो मुक्तोऽपि मुक्तायते।।

स्वकार्यसहिताविद्या बन्धकारणमुच्यते।
तन्निवृत्या विमुक्तोऽसौ निवृत्तिस्तत्त्वदर्शनात्।।

श्रवणं मननं ध्यानं तत्त्वज्ञानोपकारकम्।
अङ्गाङ्गिभावमापन्नमिलितस्यैव हेतुता।।

मुख्यसाधनरूपत्वादङ्गि श्रवणमुच्यते।
उपकारकभूतत्वादङ्गत्वं बाल्यमौनयोः।।

मोक्षस्य साधनं विज्ञैः स्वसिद्धान्तानुसारतः।
दर्शनेषूहितं सम्यग् दुःखनिवृत्तिहेतवे।।

सर्वमेतदुपाख्यानमौपनिषदमुच्यते।
तदेव स्तोत्रसाहित्ये शङ्करेण प्रपञ्चितम्।।

**पुरुषार्थस्वरूपविचारः-**

आत्यन्तिकदुःखनिवृत्तिः सास्वतसुखावाप्तिश्च प्राणिमात्रस्योद्देश्यम्। समेऽपि प्राणिनः आत्यन्तिकदुःखनिवृत्तिं सास्वतसुखञ्च कामयन्ते। पुरुषसुखमेव पुरुषार्थपदेन व्यपदिश्यते। यद्यपि

---

* वेदान्तविभागाध्यक्षः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी 3.9

"'अर्थो रै अभिधेयप्रयोजननिवृत्तिषु''[1] इति कोशवचनात् अर्थशब्दस्य द्रव्याभिधेयप्रयोजननिवृत्तिरूपा अर्था लोके प्रसिद्धाः सन्ति। तथापि पुरुषार्थपदघटकार्थशब्दस्य सुखमर्थः। धर्म-अर्थ-काममोक्षभेदेन पुरुषार्थश्चतुर्धा विभक्तः। अधार्मिकपुरुषापेक्षया धार्मिकपुरुषः सात्विकप्रवृत्तिमत्वादधिकं सुखमनुभवति।

**येन नाराधितो देवो यस्य नो गर्वनुग्रहः।**

**न वश्यं हृदयं यस्य तस्य शान्तिर्न सिद्ध्यति।।**[2]

**सा रसना ते नयने तावेव करौ स एव कृतकृत्यः।**

**या ये यौ यो भगं वदती क्षेते सदार्चतः स्मरति।।**[3]

अर्थश्च सुखसाधनत्वेन लोके सर्वजनप्रसिद्धः।

**श्रुतिशतनिगमान्तशोधकानप्यहह धनादिनिदर्शनेन सद्यः।**

**कलुषयति चतुष्पदाद्यभिन्नानघटितघटनापटीयसी माया।।**[4]

कर्मिणोऽर्थमेव सुखरूपत्वेनाभ्युपगच्छन्ति। एवं सत्कामनाऽपि सुखकरी भवति। सैव कामना सुखसाधिका या पूर्यते। कामनाया अपूर्तिर्दुःखजनिका भवति।

**मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।**

**यल्लभते निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम्।।**[5]

एतेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थस्तस्य ''न स पुनरावर्तते''[6] इति श्रुत्या नित्यत्वावगमात्।

**दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्।**

**विद्वान्नित्यसुखे निष्ठेद्धिया चिद्रसपूर्णया।।**[7]

तदिरेषां कर्मजन्यतयाऽनित्यत्वम्। तथा च श्रुतिः **तद्यथेह कर्मचितो लोके क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते**[8] यत् यत् कर्मजन्यं तत्तदनित्यं कर्मजन्यत्वात् कृष्यादिकर्मजन्यान्नादिफलवत् अनुमानमपि कर्मजन्यस्वर्गादेरनित्यत्वे मानम्। एतेन **''अपाम सोमममृता अभूम''**[9] इति श्रुतिप्रमाणेन ये स्वर्गस्य नित्यत्वमभ्युपगच्छन्ति तेऽपास्ताः। स्वर्गस्य यज्ञादिकर्मजन्यत्वादनित्यत्वमेवास्ति।

---

1. शब्दकोषः
2. सर्ववेदान्तसिद्धान्तसारसंग्रहे श्लो. १०३
3. शिवानंदलहरी श्लो. ९४.
4. मायापञ्चकम् २.
5. द्वादशपञ्चरिकास्तोत्र श्लो. १
6. छा.उप. ८/१५/१
7. अपरोक्षानभूतौ श्लो. १४२
8. छा.उप. ८/१/६
9. सांख्यकारिकाग्रंथे उद्धृता।

नित्यात्यनिपुरुषार्थेषु नित्यं मोक्षमेवाभिकाङ्क्षन्ति जना:। तत एव सास्वतसुखावाप्ति:। तत्स्वरूपप्रतिपादकत्वाद् वेदान्तशास्त्रं मोक्षशास्त्रमित्यभिधीयते। पूजितविचाररूपत्वान्मीमांसेति गीयते। तत्र पूजितत्वञ्च श्रुतिप्रमाणाभिन्तृत्वम्। अत्र सिद्धान्ते श्रुतिप्रमाणाविरुद्धानीतरप्रमाणानि प्रमाणत्वेनाभिमतानि नेतराणि। सकलानर्थभूताविद्यानिवर्तकत्वेन उपनिषदित्युच्यते। उपनिपूर्वकविशरणगत्यसादनार्थकसद्लृधातो: क्विप् प्रत्यये सति निष्पन्न उपनिषच्छब्द पराविद्याया बोधक:।

**विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादे: संसारबीजस्य विशरणाद्विसनाद्विनाशनादित्यनेनार्थयोगेन ब्रह्मविद्योपनिषदित्युच्यते**[१]

**नियाच्य तं मृत्युमुखात्प्रमुच्यते**[२]

**आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधी:।**
**भावयेदेकमात्मानं निर्मलाकाशवत्सदा।।**[३]

ब्रह्मविद्यैवात्र पराविद्यात्वेनोच्यते। परत्वञ्चात्राविद्यानिवृत्तिद्वारा सास्वतसुखस्वरूपमोक्षसाधकत्वेन। तच्च ज्ञानमद्वयात्मविषयकम्। अविद्यातत्कार्यभिन्नविषयकस्यैव ज्ञानस्य मोक्षसाधकत्वात् उक्तञ्च ब्रह्मानचिन्तनस्तोत्रे

**अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम्।**
**इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत्।।**[४]

**सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम्।**
**तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत।।**[५]

अद्वयात्मतत्त्वमेव मोक्ष:। आत्मसाक्षात्कारश्च मोक्षसाधनम्। आत्मसाक्षात्कारस्यात्मस्वरूपत्वात् सोऽपि मोक्षपदेनाभिधीयते। **यत्साक्षादपरोक्षाद् ब्रह्म**[६] अविद्याऽऽदिनिखिलप्रपञ्चश्च बन्ध:। **अविद्यास्तमयो मोक्ष: सा च बन्ध उदाहृत:**[७] संस्काराविद्यानिवृत्तिर्मोक्ष:। अविद्यैव बन्ध:। शुद्धबुद्धमुक्तस्वभावोऽपि जीवात्माऽविद्यावशाद्बद्धवद्भाति। स्वतो मुक्तस्वभावोऽपि मोहनिवृत्तिं यावद् बन्धमनुभवति। अविद्यारूपमोहनिवृत्तौ विमुक्तोऽपि विमुच्यते इति व्यवह्रियते। **निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित:**[८], तथा चोक्तमात्मबोधस्तोत्रे।

---

1. कठो.उप. शाङ्करभाष्यम्
2. कठो.उप. १/३/१५
3. आत्मबोधे श्लो. ३८
4. ब्रह्मानुचिंतनस्तोत्रे श्लो. १
5. ब्रह्मानुचिंतनस्तोत्रे श्लो. ४
6. बृ.उप. ३/४/१
7. भाष्यवार्तिकम्
8. भाष्यवार्तिकम्

**उपाधिस्वरूपविचारः-**

**अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते।**
**उपाधित्रितयादन्यमात्मानमवधारयेत् ।।**

आत्मन उपाधित्रयञ्चात्र अविद्यारूपकारणशरीरं सप्तदशावयवात्मकं लिङ्गशरीरं स्थूलशरीरञ्चेति। एतदुपाधित्रयान्तर्गताः पंचकोशाः भवन्ति। आत्मनः कोशवदाच्छादकत्वात्कोशा इति व्यपदिश्यन्ते। ते चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयभेदेन पञ्चधा। पीताशितान्नाज्जायमानं स्थूलशरीरमन्नमयकोशः। लिङ्गशरीरे कोशत्रयम्। कर्मेन्द्रियैः सह पञ्चवृत्यात्मकः प्राणः प्राणमयकोशः। ज्ञानेन्द्रियैः सह सङ्कल्पविकल्पवत्यात्मकमन्तःकरणं मनोमयकोशः। ज्ञानेन्द्रियैः सह निश्चयात्मकवृत्तियुतमन्तःकरणं विज्ञानमयकोशः। सुषुप्तिकालीनं कारणशरीरमानन्दमयकोशः। तत्र जाग्रत्स्वाप्नप्रपञ्चस्य लयेनानन्दप्राचुर्यदर्शनात्।

सुषुप्तौ सत्सम्पत्तिर्गीयते। सत आनन्दरूपत्वात्तत्सम्पत्तिश्चानन्दमया। तत्राविद्याया कोशवदात्मन आच्छादकत्वादानन्दमयकोश इति गीयते। **यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति**[२], यतो वासनामयप्रपञ्च एव दुःखहेतुः। सुषुप्तिकाले हि अन्तःकरणस्य निर्व्यापारत्वान्न काचिद्वासना जागर्ति न च दुःखानुभवः। **प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्**[३]

**जागरस्वप्नयोरेव बोधाभासविडम्बना।**
**सुप्तौ तु तल्लये शुद्धबोधो जाड्यं प्रकाशयेत।।**[४]

सुषुप्तावन्तःकरणस्य निर्वृत्तिकेऽपि अविद्याया वृत्तित्रयं जायते। सुखाकारा स्वस्वरूपाकारा (अज्ञानाकारा) अहमाकारा च। तच्च वृत्तित्रयं शुद्धबोधस्वरूपेण साक्षिचैतन्येन प्रकाश्यते। अत एव सुषुप्तोत्थितस्य **'सुखमहमस्वाप्सं न किञ्चिदवेदिषमि'**ति परामर्शः सम्भवति। अविद्यानिवृत्तिरूपतुरीयावस्थायान्तु सकलकोशनिरवच्छिन्नं शुद्धचैतन्यमेवावशिष्यते।

**निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः।**
**निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः।।**[५]

**अधिकारिस्वरूपनिरूपणम्-**

स च परमानन्दाद्वयात्मरूपो मोक्ष साधनचतुष्टयसम्पन्नैरधिकारिभिरवाप्यते। अधिकारी चात्र विधिवदधीतवेदावेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्य-

1. आत्मबोधस्तोत्रे १३
2. छा.उप. ६/८/१.
3. बृहदा.उप. ४/३/२१
4. लघुवाक्यवृत्तौ ४.
5. आत्मबोधे 33

निषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मल-स्वान्तः साधनचतुष्टयसम्पन्नो प्रमाता। एतदधिकारिलक्षणं भगवता उपदेशपञ्चरत्नस्तोत्रेऽभिहितम्।

**वेदो नित्यमधीयतां तदुचितं कर्म स्वनुष्ठीयतां**
**तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्।**
**पापौघःपरिधूयतां भवसुखे दोषोऽनुसन्धीयताम्**
**आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्।।**[१]

साधनानि तावन्नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्कसम्पत्तिमुमुक्षुत्वानि नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। तथा चोक्तमपरोक्षानुभूतिस्तोत्रे।

**नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम्।**
**एवं यो निश्चयः सम्यग्विवेको वस्तुनः स वै।।**[२]

नित्यानित्यवस्तुविवेको वैराग्योत्पत्तौ हेतुः। वैराग्यञ्च संन्यासे हेतुः। सर्वसंन्यासाच्चात्मविषयिणी जिज्ञासोदेति।

**मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम्।**
**यल्लभते निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम्।।**
**अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्।**
**पुत्रादपि धनभाजां प्रीतिः सर्वत्रैव विहिता रीतिः।।**[३]

ऐहिकसुखस्यानित्यतां परीक्ष्य तद्भोगेच्छायाः परिशान्तावपि यागादिजन्यस्वर्गरूपसुखभोगेच्छा भवति। तन्निवृत्यर्थं तस्यापि अनित्यत्वं परिकल्पनीयम्। तथा चोक्तं सर्ववेदान्तसिद्धान्तसारसंग्रहे।

**देहादिः क्षीयते लोको यथैवं कर्मणा चितः।**
**तथैवामुस्मिको लोकः सञ्चितः पुण्यकर्मणा।।**
**कृतकत्वमनित्यत्वे हेतुर्जागर्ति सर्वदा।**
**तस्मादनित्ये स्वर्गादौ पण्डितः को नु मुह्यति।।**[४]

**साधनस्वरूपविचारः-**

तदित्थमैहिकामुस्मिकफलभोगेच्छानिवृत्तौ शाश्वतसुखस्वरूपमोक्षेच्छा जागर्ति। तत्र शमदमोपरतितितिक्षासामाधानश्रद्धादयः साधनत्वेनापेक्ष्यन्ते। तत्र शमो नाम मनोनिग्रहः। दमश्च चक्षुरादि

1. उपदेशपञ्चरत्ने 1
2. अपरोक्षानुभूतिस्तोत्रे 5.
3. द्वादशपञ्चारिकास्तोत्रे श्लो. १-२
4. सर्ववेदान्तसिद्धान्तसारसंग्रहे श्लो. १६४-६५.

बाह्येन्द्रियनिग्रहः। उपरमः स्वधर्मानुष्ठानम्। तितिक्षा शीतोष्णसुखदुःखादिसहिष्णुत्वम्। गरुवेदान्तवाक्येषु विश्वासः श्रद्धा। चित्तैकाग्रता समाधानम्। एतानि साधनानि अपरोक्षानुभूतिग्रंथे यथाक्रममुक्तानि।

**सदैव वासनात्यागः शमोऽयमिति शब्दितः।**
**निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते।।**

**विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा।**
**सहनं सर्वदुःखानां तितिक्षा सा शुभा मता।।**

**निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुता।**
**चित्तैकाग्र्यं तु सल्लक्ष्यं समाधानमिति स्मृतम्।।**

**संसारबन्धनिर्मुक्तिः कथं मे स्यात्कदाविधे।**
**इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता।।**[१]

एतत्साधनसम्पन्नस्य मुमुक्षोर्भवति अद्वयात्मविषया जिज्ञासा। तज्जिज्ञोपशमनाय श्रोत्रीयं ब्रह्मनिष्ठं गुरुमेवाश्रयते। उक्तञ्च वाक्यवृत्तौ-

**"तापत्रयार्कसन्तप्तः कश्चिदुद्विग्नमानसः।**
**शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति।।**

**अनायासेन येनास्मान्मुच्येयं भवबन्धनात्।**
**तन्मे संक्षिप्य भगवन् केवलं कृपया वद।।"**[२]

तच्चात्मज्ञानं कथं सिद्ध्यति। तत्र श्रवणमनननिदिध्यासनानि तत्त्वज्ञानसाधनत्वेनोपयज्यन्ते। तत्र श्रवणं नाम गुरुमुखाच्छ्रुतवेदान्तवाक्येभ्य आत्मनिश्चयः। मननं हि युक्तिभिरवधारणम्। निश्चित्यात्मतत्वं तदनुचिन्तनञ्च निदिध्यासनम्। उक्तञ्च सदाचारानुसन्धानस्तोत्रे-

**मौन स्वाध्ययनं ध्यानं ध्येयब्रह्मानुचिन्तनम्।**
**ज्ञानेनेति तयोः सम्यङ्निषेधात्तत्त्वदर्शनम्।।**
**वेदान्तश्रवणं कुर्यान्मननं चोपपत्तिभिः।**
**योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः।।**[३]

विषयश्च **सदेव सौम्यदमग्र आसीदेकमेवाद्वितीयमि''**[४]ति श्रुतिप्रतिपादितमद्वयात्मतत्वम्। तच्चाद्वयात्मतत्वं द्वैतमिथ्यात्वनिश्चयोत्तरं निश्चीयते। प्रतीतिविषयीभूतप्रपञ्चस्य युक्त्या शास्त्रेण चावधारणं

---

1. अपरोक्षानुभूतिस्तोत्रे श्लो. 6,7,8,9.
2. वाक्यवृत्तौ श्लोक 3,4.
3. सदाचारानुसन्धानस्तोत्रे १४-१८
4. छा.उप. ६/२/१.

भवति। असन्नपि प्रतीयमानपदार्थो मिथ्या। यद्यपि शास्त्रकारैः स्वस्वसिद्धान्तदिशा मिथ्यात्वपदार्थो विवेचितः।

**मिथ्यात्वस्वरूपविचारः-**

**अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्येण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्**[1] इत्यध्यासभाष्ये भगवता शङ्करेणात्मनात्मनोरध्यासमुपवर्ण्य तस्य मिथ्यात्वमुक्तम्। तत्रैवाध्यासस्य **स्मृतिरूपः परत्र पूर्वावभासः''**[2] इत्यध्यासलक्षणमप्यभिविहितम्। तच्च मिथ्यात्वं सिद्धान्तप्रतिपादकैराचार्यैः स्वस्वयुक्त्या विभिन्नरूपत्वेन निरूपितम्। भामतीकारेणाध्यासस्वरूपं विवृण्वता **असन्नोऽवमतो वा भासोऽध्यासः। प्रत्ययान्तरबाधश्चास्यावसादोऽवमानो वा**[3] ज्ञानबाध्यत्वं मिथ्यात्वमुक्तम्। शुक्तिज्ञानेन शुक्तिरजतस्य बाध्यत्वे दृष्टान्तसङ्गतिः। आत्मसाक्षात्कारेण प्रपञ्चस्य निवृत्तिर्भवतीति दार्ष्टान्तेऽपि सङ्गतिः।

एवमेव मिथ्यात्वस्वरूपं प्रतिपादयद्भिः पद्मपादाचार्यैः ''मिथ्याशब्दो द्व्यर्थः- अपह्नववचनोऽनिर्वचनीयतावचनश्च'' इत्युक्तम्। अपह्नवो नाम गोपनम्। सतोऽपि वस्तुनोऽसत्वेन कथनमपलापः। प्रतीयमानप्रपञ्चस्य युक्त्याऽपलापः। अनिर्वचनीयतावचनश्च सदसद्विलक्षणत्वम्। सत्वञ्च त्रिकालाबाध्यसत्ताकत्वम्। असत्त्वञ्च क्वचिदप्युपाधौ सत्वेन प्रतीत्यनर्हत्वम्। शुक्तिरूप्यादेः शुक्त्याद्यधिष्ठानज्ञानेन बाध्यतया व्यावहारिकप्रपञ्चस्य चात्मसाक्षात्कारेण बाध्यत्वेन न सत्यत्वम्। स्वस्वाधिष्ठाने सत्वेन प्रतीयमानत्वाच्च नासत्यत्वम्। अतः सदसद्विलक्षणत्वेनानिर्वचनीयत्वम्।

**संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः।**
**स्वकाले सत्यवद्भाति प्रबोधे सत्यसन्भवेत्।।**
**तावत्सत्यं जगद्भाति शुक्तिका रजतं यथा।**
**यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम्।।**[4]

**ख्यातिस्वरूपविमर्शः-**

अयमेव मिथ्याभूतोऽध्यास भ्रमात्मकत्वेन ख्यातिपदेन बोध्यते। तद्विषयस्य च सत्वेन असत्वेन अनिर्वचनीयत्वेन सत्ख्यातिरसत्ख्यातिरनिर्वचनीयख्यातिरित्यादिपदैरभिधीयते। तत्रात्मख्यातिरन्याख्यातिश्च सत्ख्यातेरेव प्रकारान्तरम्। तथा हि येषां दार्शनिकानां मते भ्रमविषयः सन् ते सत्ख्यातिवादिनः। तत्र नैयायिका हाटकस्थस्य सतो रजतस्य शुक्तिकादौ प्रत्ययं स्वीकुर्वन्ति। अधिष्ठानभूतशुक्ते रजतत्वेन प्रत्ययोऽन्यथात्वम्। अथ च हाटकस्थरजतस्य पुरोवर्तित्वेन प्रतीतिरन्यथात्वम्।

---

1. अध्यासभाष्ये
2. अध्यासभाष्ये
3. अध्यासभाष्ये भामती टीका
4. आत्मबोधे श्लोक. ६,७.

उभयत्राप्यन्यथात्वप्रत्ययात्सद्विषयकज्ञानस्य भ्रमत्वम्। विज्ञानवादिनो बौद्धास्तु ज्ञानात्मना रजतस्य सत्वं स्वीकुर्वन्ति। तस्य बहिर्भासनं भ्रमः। रामानुजीयास्तु सर्वस्यापि भौतिकपदार्थस्य पञ्चीकृतत्वात् सर्वात्मकत्वं मन्यन्ते। रजतोत्पादकावयवाः शुक्तिकादावपि सन्ति। अतः शुक्तिकादौ पञ्चीकरणप्रक्रियया सदेव रजतं ज्ञायते। अत एतेषां मते भ्रमविषयस्य यत्र कुत्रापि सत्ताऽभिमताऽस्तीति सत्ख्यातिवादिनः सर्वे।

अद्वैतिनस्तु सदसद्विलक्षणरजतात्मना शुक्त्यधिष्ठानविषयाऽविद्या परिणमते इति स्वीकुर्वन्ति। तेषां मते कारणभूताविद्याया अनिर्वचनीयतया तत्कार्यभूतस्य रजतस्यानिर्वचनीयत्वम्। एतेषां मते शुक्तिरजतविषयं ज्ञानं शुक्तिरजतयोः संसर्गश्चानिर्वचनीयतयोत्पद्यते। तत्र नेदं रजतमिति बाधविषयताऽपिभिन्ना। नैयायिकानां नये हाटकस्थरजतस्य पुरोवर्तिना सह प्रतीयमानसंसर्गो बाध्यते। विज्ञानवादिनां मते बहिर्भासमानस्य बाधः। रामानुजीयानां मते व्यवहारार्हताया बाधः। भिन्नावयवेषु जायमानस्य रजतस्याल्पत्वात् व्यवहारार्हता नास्ति। अद्वैतिनां मते नेदं रजतमिति बाधकज्ञानेन रजतस्य रजतज्ञानस्य शुक्तिरजतसंसर्गस्य च बाधो भवति। शून्यवादिनां मतेऽसदेव रजतं भासते। बाधकज्ञानेन रजतज्ञानमात्रस्य बाधो भवति। रजतं तु तत्रास्त्येव न हि। अख्यातिवादिनां मते ज्ञानानि सर्वाण्यपि यथार्थानि व्यवहारो भ्रमस्तस्यैव च बाधः। संक्षेपेण ख्यातिपदार्थो निरूपितो विस्तरेण भाष्यविवरणादिग्रन्थेषु द्रष्टव्यम्।

एतत्ख्यातिस्वरूपमपि स्तोत्रसाहित्ये समुपलभ्यते।

**रज्ज्वज्ञानाद्भाति रज्जौ यथाऽहिः स्वात्माज्ञानादात्मनो जीवभावः।**
**आप्तोक्त्याऽहिभ्रान्तिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोऽहम्।।[१]**

**अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम्।**
**अज्ञानं चान्यथाज्ञानं मायामेतां वदन्ति ते।[२]**

इत्यत्र भ्रमस्य मायामयत्वमुक्तम्। एवमेवातात्त्विकपरिणामवादेऽपि भगवत्पादीयस्तोत्रसाहित्ये बहुप्रपञ्चितम्।

**यथैवात्माविशुद्धोऽस्ति ह्यशुद्धो भाति वै सदा।**
**यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम्।।**

**सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका।**
**विनिर्णीता विमूढेन देहत्वेन तथात्मनः।।**

**घटत्वेन यथा पृथ्वी पटत्वेनेव तन्तवः।**
**विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मनः।।[३]**

1. अद्वैतपञ्चरत्नम्- २.
2. सदाचारानुशासनस्तोत्रे- श्लोक. ४०.
3. अपरोक्षानुभूतौ श्लोक. ६८,७०,७१.

इत्थमध्यासस्वरूपमुपवर्ण्य तस्य मिथ्यात्वञ्च प्रतिपाद्य तत्रैव स्तोत्रसाहित्येऽध्यासनिरास-प्रकारोऽपि प्रदर्शितः।

**अध्यासनिरासविचारः-**

**एवमात्मन्यविद्यातो देहाध्यासो हि जायते।**
**स एवात्मपरिज्ञानाल्लीयते च परात्मनि।।**

**सर्वमात्मतया ज्ञातं जगत्स्थावरजङ्गमम्।**
**अभावात्सर्वभावानां देहस्य चात्मता कुतः।।**[१]

प्रपञ्चस्याताात्त्विकत्वं परिज्ञानाय तद्विषयकभोगेच्छाया विरतिरापेक्ष्यते। फलभोच्छाविरागाच्च संन्यासस्ततो मुमुक्षुत्वमिति स्थितिः। मोक्षेच्छायां सत्यां मोक्षोपायभूतात्मज्ञाने प्रवृत्तिर्भवति। आत्मज्ञानसाधनभूता उपनिषदः सेवनीया इति धियोपनिषदर्थज्ञाने प्रवर्तते।

**त्यक्त्वा गृहे रतिमधोगतिहेतुभूता मात्मेच्छयोपनिषदर्थरसं पिबन्तः।**
**वीतस्पृहा विषयभोगपदे विरक्ता धन्याश्चरन्ति विजनेषु विमुक्तसङ्गाः।।**[२]

**आत्मज्ञानोपायस्तत्फलनिरूपणम्-**

पूर्वमज्ञातमश्रुतञ्चाद्वैतात्मतत्वं श्रुतये लक्षणावृत्या बोधयन्ति। तात्पर्यानुपपत्तिर्हि लक्षणाबीजम्। लोके तात्पर्यावधारणं वक्त्रधीनं भवति। श्रुतीनामपौरुषेयतया वक्तुरभावादुपनिषदामुपक्रमोपसंहारादिभिः षड्विधलिङ्गैस्तात्पर्यावधारणम्।

**उपक्रमोपसंहार अभ्यासोऽपूर्वताफलम्।**
**अर्थवादोपपत्तिश्च लिङ्गं तात्पर्यनिर्णये।।**

आत्मज्ञानं द्विविधं परोक्षमपरोक्षञ्च। परोक्षात्मज्ञानं तत्कालिकप्रवृत्तिनिवर्तकं सदपि सास्वतप्रवृत्तिप्रतिबन्धकं न भवति। अपरोक्षात्मज्ञानमेवाविद्यादिसकलानर्थनिवर्तकम्। शब्दजन्यवृत्यात्मकं ज्ञानं ब्रह्मेतरविषयकवृत्तिनिवर्तकतयाऽहंब्रह्मास्मीति वृत्तिजनने निमित्तम्। अहं ब्रह्मास्मीतिवृत्तिजन्यात्मसाक्षात्कारो हि ससंस्काराविद्यानिवर्तकम्।

**विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः।**
**परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम्।।**

**यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम्।**
**अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम्।**[३]

1. अपरोक्षानुभूतौ श्लोक. ८७,८८.
2. धन्याष्टके श्लोक. ३.
3. सदाचारानुशासनस्तोत्रे- श्लोक. ४५,४९.

गुरुमुखाच्छ्रुतोपनिषद्वाक्यार्थविचारेण जीवात्मपरमात्मनोरभेदबोध: संभवति। तच्च श्रवणमुच्यते। ततश्च युत्त्याऽवधार्यते। युत्त्याऽवधारितं ज्ञानं मननं कथ्यते।

**शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः।**
**सर्वसाक्षितयाऽऽत्मानं सम्यङ्‌निश्चित्य सुस्थिरम्।।[१]**

श्रवणमननाभ्यामवधारितात्मतत्त्वं तत्त्वमसीतिवाक्यार्थबोधद्वारा जीवेनाभेदमुपयाति।

**निर्गुणं परमं ब्रह्म सच्चिदानन्दमद्वयम्।**
**तत्त्वमस्यादिवाक्येन सोऽहं ब्रह्म निरामयम्।।**

**एकमेवाद्वितीयं च नामरूपविवर्जितम्।**
**एकमेव समं तत्त्वं सोऽहं ब्रह्म निरायमयम्।।[२]**

तत्वमसिवाक्यघटकतत्त्वपदे लक्षणावृत्याऽभेदबोधने सक्षेते। तत्रोभयोः पदयोः शक्यार्थ-लक्ष्यार्थविचारोऽपि वाक्यवृत्तौ प्रतिपादितः।

**अखण्डात्मवृत्तिस्वरूपविचारः-**

**त्वमर्थमेव निश्चित्य तदर्थं चिन्तयेत्पुनः।**
**अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च।।**

**तत्त्वं पदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना।**
**तादाम्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः।।**

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः।**
**अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतम्।।[३]**

तत्रैव तत्त्वमस्यादिवाक्यजन्यज्ञानस्य मोक्षसाधनत्वमुक्तम्।

**तत्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः।**
**तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम्।।[४]**

तत्वमसिवाक्यबोधोत्तरमहं ब्रह्मास्मीति ब्रह्मविषयाऽखण्डाकारा वृत्तिर्जायते। तया वृत्या ब्रह्मवृत्तीतरवृत्तीनां विलयो भवति।

---

1. अनुभवसोनापस्तोत्रे श्लोक. १.
2. ब्रह्मनिरामयाष्टकस्तोत्रे श्लोक. ३,४.
3. वाक्यवृत्तौ श्लो. २८,३७,३८.
4. वाक्यवृत्तौ श्लो. ६.

**येषां वृतिः समा वृद्धा परिपक्वा च सा पुनः।**
**ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः।।**

**दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्।**
**विद्वान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया।।**[१]

अहं ब्रह्मास्मीतिचरमवृत्तिरियं स्वस्वेतरनिवृत्तिहेतुरुदेति। एतद्वृत्तिनिरासाय वृत्त्यन्तरं नापेक्ष्यते। वृत्तिदशायां वृत्तेरेवोपाधितया विद्यमानत्वेन न शुद्धचैतन्यस्थितिः। वृत्याऽविद्यारूपावरणनिवृत्तौ शुद्धं ब्रह्मावशिष्यते। स एव मोक्षः।

**यस्मिन् सर्वाणि भूतानि ह्यात्मत्वेन विजानतः।**
**न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः।।**[२]

प्रारब्धकर्मविशेषकाले यदद्वयात्मनिश्चयः सा जीवन्मुक्तिरित्यभिधीयते। तदानीं प्रारब्ध-कर्मभोगात्मना ससंस्काराविद्याया विद्यमानत्वान्न सास्वतमोक्षः। अद्वयात्मनिश्चये जाते सतताभ्यासलब्धाहं ब्रह्मास्मि वृत्तिधारा जायते। सा च वृत्तिधारा ध्यानशब्देन गीयते।

**ब्रह्मैवास्मीति तद्वृत्या निरालम्बतया स्थितिः।**
**ध्यानशब्देन विख्याता परमानन्ददायिनी।।**[३]

यद्यपि निर्विकल्पकसमाधिरेव मोक्षावस्था तत्रैव सर्वतो भावेनाद्वयात्मस्थितेः। तथापि समाधेरुत्थितस्य पुंसः प्रपञ्चेऽतात्विकत्वनिश्चयान्न बन्धः। भेदबुद्धेरेव मोहजनकत्वाज्जीवन्मुक्तौ भेदस्य निरासात्।

**मुक्तात्मस्वरूपविचारः-**

**सर्वभूतसमं ब्रह्म भेदोऽभेदो न विद्यते।**
**एकमेवाधिपश्यन्ति जीवन्मुक्तः स उच्यते।।**[४]

प्रारब्धकर्मक्षयसमकालीनाखण्डाकारवृतिनिवृत्याज्ञानं विदेहमुक्तिरित्यभिधीयते। चरमक्षणवृत्तिरेव विदेहमुक्तिहेतुः। चरमक्षणत्वञ्च वृत्तिप्रागभावानधिकरणत्वम्। यत्क्षणोत्तरं वृत्तिर्न जायते स क्षणो वृत्तिप्रागभावानधिकरणक्षणः। तत्क्षणोत्पन्ना वृत्तिः ससंस्काराविद्यां तत्कार्यभूतं प्रपञ्चं निरासयति। निवृत्ते च प्रपञ्चेऽद्वयात्मतत्वमेवावशिष्यते।

**आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन।**
**स्वभावनिर्मलः शुद्धः स एवाहं न संशयः।।**

---

1. अपरोक्षानुभूतौ श्लोक. १३१,१४२.
2. अपरोक्षानुभूतौ श्लोक. ५४.
3. अपरोक्षानुभूतौ श्लोक. १२३.
4. जीवन्मुक्तलक्षणे श्लोकः ४.

**ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत्।**
**अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत्।।[१]**

इत्थं भगवत्पादीयस्तोत्रसाहित्ये सर्वत्राप्यद्वैततत्वं निरूपितमस्ति। अद्वयात्मतत्वमविद्यावासात् कथं कर्तृत्वादिकमापद्यते। अविद्यानिवृत्तिश्च कथं भवतीति सर्वं स्तोत्रसाहित्ये भगवता शङ्करेण प्रपञ्चितम्। अध्यासस्वरूपं तन्मिथ्यात्वप्रकारश्च स्तोत्रसाहित्ये विस्तरेण प्रतिपादितः। सर्वोऽप्यद्वैतसिद्धान्तः स्तोत्रसाहित्ये प्रतिपादित इति वक्तुं शक्यते।

**यदुक्तं स्तोत्रसाहित्येऽद्वैततत्त्वं समासतः।**
**सर्वमत्र समादिष्टं विस्तरस्तत्र विद्यते।।**

1. ब्रह्मानुचिंतनस्तोत्रे श्लो. १८,१९.

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर 2018 वर्षः 43, तृतीयाङ्कः

# मनुष्याणां चित्तस्य नियन्त्रणे बौद्धमनोविज्ञानस्य योगदानम्

प्रो.हरेरामत्रिपाठी*

मनसः विज्ञानं मनोविज्ञानं भवति। यस्मिन् शास्त्रे मानसिकविचाराणां व्यवहाराणाञ्च विवेचनं भवति तच्च मनः शास्त्रमिति। मनुष्याणां कायिकवाचिकव्यवहाराणां कारणं मनः अस्ति। मानसिकविचार एव क्रियारूपेण प्रादुर्भवति[1]। मनसि विचाराः इच्छाश्च प्रतिक्षणम् उत्पद्यन्ते, यतः क्रियायाः उत्पत्तिर्भवति तस्याः अध्ययनं मनोविज्ञानं करोति। भगवान् बुद्धः उक्तवान् यत् सर्वेषु धर्मेषु मन अग्रगामी विद्यते। सर्वे धर्माः मनोमयाः भवन्ति। सर्वेषु धर्मेषु मनः श्रेष्ठो वर्तते। मनः सुखदुःखयोः मनोगतशुभाशुभयोश्च इत्थं रूपेण अनुसरणं करोति, यथा यानवाहिनः, पशोः यानचक्रं वा पुरुषस्य छाया[2]। क्लेशः व्यवदानं च मनः आश्रित्य प्रवर्तेते। कर्मणः मूलं चित्तमेव विद्यते। कर्मणश्चैव जगदिदं क्रियाशीलमस्ति। जगतः दुःखं ततः विमुक्तिश्च चित्ताधीना विद्यते।

**मनोपुब्बङ्गमा धम्मा, मनोसेट्ठा मनोमया।**
**फन्दनं चपलं चित्तं, दुरक्खं दुन्निवारयं।**
**चित्तं रक्खेथ मेधावी, चित्तं गुत्तं सुखावहं।[3]**

बौद्धमनोविज्ञानस्य तात्पर्यमिदमस्ति यत् बौद्धपरम्परायामुपलब्धसाहित्ये वर्णितं मनोविज्ञानमिति। मनः शब्दः व्यक्तित्वस्य तस्यांशस्य परिचायको विद्यते, यत् मननप्रक्रियया चिन्तनप्रक्रियया विजाननप्रक्रियया च युक्तं मनो भवति। वस्तुतः नामरूपात्मकसत्त्वस्य परिचायकं मनः इदं भवति। चित्तानां चैतसिकानां च सम्मिलितं रूपं मनोविज्ञानं भवति। मनोविज्ञानं तु मनसः विश्लेषणात्मकं सुनियमितमध्ययनं करोति। पालिग्रन्थेषु मनोविज्ञानं नाम षड्सप्ततिः चित्तानां संज्ञाः सन्ति। पालित्रिपिटके मनः विवरणं सर्वत्र विद्यते। ब्रह्मजालसूक्ते द्वाषष्टिः मनसः धारणानामुल्लेखो विद्यते। यत् मननं करोति तच्च मनः अस्ति, यत् चिन्तनं करोति तच्च चित्तमस्ति। यत् विषयं जानाति तच्च विज्ञानमस्ति।

## बौद्धमनोविज्ञानस्य क्षेत्रम्

आधुनिकमनोविज्ञानं मनसः अवस्थायाः तस्य प्रवृत्तीनामथ च लोकस्य क्रियमाणानां कार्याणां सोदाहरणं वर्णनं करोति। तत्र संवेदनायाः स्मृतेः कल्पनायाः चिन्तनस्य मननस्य अध्ययनस्य अभिप्रेरणायाः

---

* दर्शनसंकायप्रमुखः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. ध.प.1/1
2. अ.सा.पृ.134
3. दी.नि., भा. 1 सु. 1-2

संवेगस्य च स्वरूपं दर्शयति। अत्र मनसः लोकानुकूला या क्रिया भवति तस्याः वर्णनं विद्यते। यतो हि भगवतां बुद्धानां जीवनदर्शनमध्यात्ममासीत्।

**बौद्धमनोविज्ञानस्य उद्देश्यम्**

चित्तसुत्ते द्वे पद्ये स्तः। प्रथमे प्रश्न वर्तते, द्वितीये उत्तरमस्तिः-

**केनस्सु नियति लोको केनस्सु परिकस्सति।**
**किसस्सु एकधम्मस्स सब्बेव बसमन्वगू ति।।**[1]

**चित्तेन नियति लोको चित्तेन परिकस्सति।**
**चित्तस्स एकधम्मस्स सब्बेव वसमन्वगू ति।।**[2]

अस्य तात्पर्यमिदं वर्तते यत् चित्तादेव अस्य लोकस्य प्रवृत्तिर्भवति, चित्तादेव दुःखं भवति, चित्तादेव लोकोऽयं परिभ्रमति। तथा च चित्तमेव संसारनिर्वाणयोः कारणमिति। यत्र यत्र चित्तस्य प्रवृत्तिर्भवति तत्र तत्र सत्त्वं कर्म करोति। यथा रथचक्रं स्वाक्षस्य आश्रयेण परिभ्रमति तथैव चित्तबन्धनेन जीवोऽयं परिभ्रमति। चित्तं स्वभावतः परिशुद्धं वर्तते। आगन्तुकक्लेशैः यदा संसृष्टं भवति तदा सत्त्वानां दुःखस्य कारणं भवति। क्लेशान् संगृह्य रागद्वेषमोहाख्यानामकुशलमूलानां संयोगेन विविधविषयान् प्रति चित्तं प्रवर्तते, तदनन्तरं तत् मलिनं भवति तदा दुःखं प्राप्नोति। अत एव बुद्धैरुक्तम्-

**दीघरत्तं इदं चित्तं संक्लिट्ठं रागेन, दोसेन,**
**गोहेनाति, चित्त संकिलेसा सत्ता संक्लिस्सन्ति**[3]

यदा चित्तं मूढात्मकप्रवृत्तितः पृथगभवति, तदा परिशुद्धरूपेण तिष्ठति सुखं चोत्पादयति। विषयेषु प्रवृत्तेः निवारणं न्यूनाधिकरूपेण यदा भवति तदा दुखस्य निवृत्तिः न्यूनाधिकभावेनैव भवति। अत एवोक्तम्-

**यतो यतो मनो निवारये, न दुक्खमेति नरं ततो ततो।**
**स सब्बतो मनं निवारये, स सब्बतो दुक्खा पमुच्चति**[4]**।**

बौद्धमनोविज्ञानं शरीरस्य सर्वाणि अङ्गानि आश्रित्य चिन्तनं करोति। अस्मिन् शोधपत्रे अधोलिखिताः विषयाः मुख्याः सन्ति।

---

1. सं.नि., भा. 1 पृ. 39
2. सं.नि., भा. 1 पृ. 39
3. सं.नि., भा. 2 पृ. 360
4. सं.नि., भा. 1 पृ. 14

1. सत्त्वस्य व्यक्तित्वं तत्र मनसः स्थानञ्च।
2. चित्तस्य वा मनसः स्वरूपं तस्य अवस्थाः।
3. आध्यात्मिकोत्थानदृष्टया चतस्रः भूमयः।
4. चित्तस्य कुशलाकुशलादीनामध्ययनम्।
5. भूमिगतचित्तानां परिचयः।
6. मानसिकप्रवृत्तयः।
7. चैतसिकानां भेदः चित्तेन सह सम्बन्धश्च।
8. चित्तस्य विषयस्य च विजाननप्रक्रिया।
9. पुरूषाणां कार्याणि दृष्टवा चित्तस्य अध्ययनम्।
10. चित्तं कर्म सिद्धान्तश्च।

मानवानां वास्तविकस्वरूपं दर्शयन् आह भगवान् बुद्धः-

**यथा हि अङ्गसम्भारा होति सद्दो रथो इति।**
**एवं खन्धेसु सन्तेसु होति सत्तो ति सम्मुचि[1]॥**

अर्थात् यथा चक्रम्, अक्षः, पंजरं, ध्वजः, अश्वः, सारथिः चेति योगात् रथसंज्ञा भवति तथैव रूपवेदनासंज्ञासंस्कारविज्ञानस्कन्धैः निष्पन्न आकारः मनुष्यपदवाच्यो भवति। वस्तुतः पञ्चस्कन्धानां समुदायः एव पुरूषपदवाच्यो भवति।

**रूपस्स्कन्धः कतमं सब्बं रूपं ति[2]।** अस्य प्रश्नस्य समाधानमुच्यते यत् चतुर्णां महाभूतानां यदुपादानं रूपं भवति तस्य सर्वरूपसंज्ञा भवति। अत एवोच्यते-

**चत्तारो च महाभूता चतुन्नं च महाभूतानं**
**उपादाय रूपं-इदं वुच्चति सब्बं रूपं[3]।**

अत्र **पठवी, आपो, तेजो, वायो चेति चत्वारि भूतानि, चक्खायतनं, सोतायतनं, घाणायतनं, जिह्वायतनं, कायायतनं, रूपायतनं, सद्दायतनं, गन्धायतनं, रसायतनं, इत्थिन्द्रियं, पुरिसिन्द्रियं, जीवितिन्द्रियं, कायविञ्ञत्ति, आकासधातु, रूपस्सलहुता, रूपस्समुदुता,**

1. सं.नि., भा. 1 पृ. 135
2. ध.सं. पृ. 147
3. ध.सं. पृ. 147

**रूपस्सकमञ्ञता रूपस्सउपचयो, रूपस्ससन्तति, रूपस्सजरता, रूपस्सअनिच्चता कवलीकारो आहारो चेति**[1] त्रयोविंशतिः उपादानरूपाणि आश्रित्य सप्तविंशतिः रूपाणि भवन्ति। हृदयवत्थु अपि रूपमस्ति तथा च अष्टाविंशतिः रूपाणि भवन्ति।

लिङ्गभेदमाश्रित्य शरीरस्य रचना भवति इति बौद्धदर्शने प्रतिपादितं विद्यते।

**मनसः स्वरूपम्**–[2]

अभिधर्मदर्शने मनसः स्वरूपम् उपलभ्यते। तत्र मनः इत्यस्य कृते चित्तशब्दस्य प्रयोगो वर्तते। रूपशब्दरसस्पृष्टव्यधर्माख्यविषयान् आश्रित्य मनः उत्पद्यते। तदनन्तरं तस्य निरोधो भवति। उत्पत्तिनिरुद्धयोः प्रक्रियासततं चलति तथा च चित्तमिदमुत्पत्तिमत् निरूद्धमच्च वर्तते। यथा वायुसंसर्गात् नदीषु तरंगानि जायन्ते तेषां निरोधोऽपि भवति। यथा नद्याः प्रवाहः सततं प्रचलति तथैव चित्तमपि नूतनविषयं स्वीकृत्य उत्पद्यते निरूद्ध्यते च तथापि चित्तपरम्परा प्रचलति। अस्य अपरं नाम चित्तसन्ततिः अस्ति।

**मनश्शरीरयोः सम्बन्धः**–

भगवान् बुद्धः मनश्शरीरे सहवर्ती अन्योन्ये च निरूपितवान्। **विञ्ञाण पच्चया नाम रूपम्।** मनसः स्थितिः शरीरं विना न संभवति, शरीरस्य स्थितिः मनः विना न संभवति। नामरूपे अन्योन्याश्रिते स्तः। रूपस्य नाशे सति चित्तचैतसिकयोः नाशो जायते। अत एव शरीरमनसोः अविच्छेद्यसम्बन्धे वर्तते। विचारेच्छयोः प्रादुर्भावः मनसि भवति। परन्तु विचारेच्छयोः उत्पत्तिः शरीरं विना न सम्भवति। इच्छाविचारकल्पनाभ्यः शरीरं मनः आश्रितं भवति। मनः विना शरीरस्य स्वतन्त्ररूपेण स्थितिः नास्ति। मनसः भ्रान्तत्वात् शरीरमपि भ्रान्तं भवति। मनोविकृत्या शरीरे अनेके रोगाः भवन्ति।

**चित्तस्य भेदः**–

भगवान् बुद्धः जनेषु दुःखं दृष्ट्वा तस्य निराकरणाय साधनापक्षस्य प्रज्ञप्तिं चकार। पूर्वदुःखानां नाशः नूतनानां दुःखानामुत्पत्तिर्न भवेदेतदर्थं कुलपुत्रविवर्जितं ब्रह्मचर्यवासं कुर्यात्। प्रदुष्टचित्तं दुःखं ददाति, परिशुद्धचित्तं च सुखं प्रददाति। चित्तं स्वभावतः प्रदुष्टं भवति वा परिशुद्धं भवति इति जिज्ञासायां भगवान् बुद्धः वदति चित्तं स्वस्वाभाविकरूपेण परिशुद्धमस्ति, तच्च केवलमागन्तुकक्लेशानां योगेन उपक्लिष्टं भवति।

**चित्तस्य सामान्यरूपं कामावचरचित्तञ्च**–

चित्तस्य सामान्यरूपमस्ति, तच्च सक्रियं, चपलम्, अदान्तं, यत्थतथ्यं, भ्रमणशीलं, यत्थतथ्यं निपातिः, चेति स्वरूपं भवति[3]। एतादृशं चित्तं कस्मिंश्चित् आलम्बने स्थिरं न भवति, अपितु प्रतिक्षणं

1. ध.सं. पृ. 160
2. चित्तं इति पि मनो इति पि विञ्ञाणं, स.नि. भा. 2 पृ. 94
3. पभस्सरमिदं, भिक्खवे, चित्तं। तं च खो आगन्तुकेहि उपक्किलेसेहि संकिलिट्ठ'ति। अं.नि.

नूतनमालम्बनं स्वीकृत्य प्रतिक्षणं परिवर्तितं भवति। अत एव भगवान् बुद्धः अवदत्-

**सुदुद्दसं सुनिपुणं, यत्थकामनिपातिनं।**
**चित्तं रक्खेथ मेधवी, चित्तं गुत्तं सुखावहं।**[1]

मनसः चाञ्चल्यकारणात् लोकस्य वस्तुनि प्रति तस्य अनुरक्तिः भवति, तत्र दुःखस्य अभिवृद्धिर्भवति। चित्तस्य एतादृश्याः अवस्थायाः नाम कामावचरचित्तभूमिः अस्ति। कामशब्दस्य अर्थः इच्छा अस्ति। यत् चित्तं इच्छाहेतुना उत्पन्नं भवति, तच्च कामावचरचित्तमस्ति। अत एव उक्तम्-

**कामा अवचरन्ति एत्थ बाहुल्येन पवत्तन्ती ति कामावचरभूमि।**
**तस्सं विसेसतो पवत्तमानं चित्तं कामवरचं ति वुच्चति।**[2]

## परिशुद्धोन्मुखं चित्तं वा रूपावचरचित्तम्-

भगवतः बुद्धस्य धर्म्मदर्शनयोः लक्ष्यमस्ति दुःखस्य निवृत्तिः सुखस्य प्राप्तिश्च तदर्थं चित्तं नितान्ततः परिशुद्धं शीघ्रं न भवति अपितु तस्य क्रमिकावस्थाः भवन्ति। अनेन माध्यमेन न्यूनाधिकरूपेण परिशुद्धेः स्वरूपमस्माभिर्दृश्यते। ध्यानाङ्गानि आश्रित्य एकस्मिन् आलम्बने चित्तमेकाग्रं भवति। यदा चित्ते रूपालम्बनस्य एकाग्रसामर्थ्यमागच्छति तदा चित्तस्य नाम रूपावचरं वा परिशुद्धोन्मुखचित्तं भवति। अस्याः अवस्थायाः नाम रूपावचरचित्तभूमिः अस्ति।

## परिशुद्धचित्तं रूपावचरचित्तम् च-

यदा चित्तस्य एकाग्रता रूपरहितविषयोपरि भवति तदा अस्य नाम रूपावचरचित्तं भवति। यदा चित्तं निर्वाणस्य साक्षात्कारं करोति तदा अस्य नाम परिशुद्धचित्तं वा लोकोत्तरचित्तमिति। मुख्यरूपेण चित्तं द्विविधं भवति। संक्लिष्टचित्तमवदानचित्तञ्च लोभद्वेषमोहयुक्तं चित्तमाकुशलचित्तं भवति। चित्तस्य एकाग्रतायां बाधकानि तत्त्वानि नीवरणपदवाच्यानि भवन्ति, एते षड् भवन्ति, कामच्छन्दः, व्यापादः, उद्धच्चः, कुक्कुच्चः, विचिकित्सा, अविद्या च। संयोजनशब्दस्यार्थः बन्धनयुक्तं यस्य पुरूषस्य चित्तसन्ताने संयोजनं विद्यते। तच्च संयोजनं तं पुरुषं भवचक्रे आयाति **'यस्स संविज्जन्ति तं पुग्गलं वट्टस्मिं संयोजेन्ति, बन्धन्तीति संयोजनानि**[3]। संयोजनानि दश भवन्ति, कामः, प्रतिघः, मानं, दृष्टिः, विचिकित्सा, शीलव्रतं, परामासः, भवरागः, ईर्श्या, मात्सर्यमविद्या च। चित्तं यत् क्लिष्टं करोति तस्य नाम क्लेशः अस्ति। क्लेशः दशविधः भवति, लोभः, द्वेषः, मोहः, मानं, दृष्टिः, विचिकित्सा, स्त्यानम्, औद्धत्यम्, आह्रीक्यम्, अनोत्तपश्च। लोकोत्तरचित्तस्य भेदाः एकविंशतिः वा सप्तत्रिंशत् भवन्ति।

---

1. ध.प. (चित्तबग्गो)
2. आरम्मणकरण वसेन वा एत्थ कामो अवचरती ति पि कामावचरं। अपि च काम भव संखाते कामे पटिसन्धिं अवचारेतीति कामावचरं।(अ.सा., पृ. 52( अ.सं.न.टी., पृ. 21)
3. अ.सा.पृ.41

अहेतुककुशलविपाकचित्तस्य[1] अधोलिखिता: भेदा: भवन्ति-

1. उपेक्षासहगतकुशलविपाकचक्षुर्विज्ञानम्।
2. उपेक्षासहगतकुशलविपाकश्रोत्रविज्ञानम्।
3. उपेक्षासहगतकुशलविपाकघ्राणविज्ञानम्।
4. उपेक्षासहगतकुशलविपाकजिह्वाविज्ञानम्।
5. उपेक्षासहगतकुशलविपाककायविज्ञानम्।
6. उपेक्षासहगतकुशलविपाकसम्पटिच्छन्नचित्तम्।
7. सौमनसहगतकुशलविपाकसन्तीरणचित्तम्।
8. उपेक्षासहगतकुशलविपाकसन्तीरणचित्तम्।

अहेतुकमकुशलविपाकचित्तस्य निम्नलिखिता: भेदा: भवन्ति-

1. उपेक्षासहगताकुशलविपाकचक्षुर्विज्ञानम्।
2. उपेक्षासहगताकुशलविपाकश्रोत्र विज्ञानम्।
3. उपेक्षासहगताकुशलविपाकघ्राणविज्ञानम्।
4. उपेक्षासहगताकुशलविपाकजिह्वाविज्ञानम्।
5. उपेक्षासहगताकुशलविपाककायविज्ञानम्।
6. उपेक्षासहगताकुशलविपाकसम्पटिच्छन्नचित्तम्।
7. उपेक्षासहगताकुशलविपाकसन्तीरणचित्तम्।

अभिधर्मदर्शनानुसारं चित्तानि नवाशीतिः भवन्ति। तेषां विवरणमधोलिखितं वर्तते।

अकुशलचित्तम् द्वादश, कुशलचित्तम् एकविंशतिः, विपाकः षड् त्रिंशत्, क्रियाः विंशतिः, योगः नवाशीतिः[2]। अनिरुद्धाचार्यो वदति यत्-

**द्वादशकुसलानेवं कुसलानेकवीसति।**
**छत्तिंसेव विपाकानि क्रियाचित्तानि वीसति।।**[3]

1. अ.सं.न.टी.पृ.6, 8
2. बौ.मनो.128, 29
3. बौ.मनो.पृ.138

अर्थात् कामावचरचित्तं चतुःपञ्चाशत्, रूपावचरचित्तं पञ्चदश, अरूपावचरचित्तं द्वादश, लोकोत्तरचित्तं द्वादश च भवन्ति। ध्यानयोगेन लोकोत्तरचित्तस्य गणनां यदा वयं कूर्मः तदा लोकोत्तरचित्तस्य भेदाः चत्वारिंशत् भवन्ति। अनया रीत्या एकविंशत्यधिकैकशतं चित्तस्य भेदाः भवन्ति।

### मोहसहगतचित्तं चैतसिकश्च

मोहसहगतप्रथमचित्तेन सह चैतसिकाः त्रयोविंशतिः भवन्ति। **फस्सो, वेदना, सञ्ञा, चेतना, चित्तं, वितक्को, विचारो, उपेक्खा, चित्तस्सेकग्गता विरियिन्द्रियं, सोगिनन्द्रियं, उपेक्खिन्द्रियं, जीवितिन्द्रियं, मिच्छासंकप्पो, मिच्छावायामो, विरियबलम्, अहिरिकबलम्, अनोतप्पबलम्, विचिकिच्छा, मोहो अहिरिकम्, अनोत्तंप्पं, पग्गाहो मोहसहगतप्रथमचित्ते**[1] चैतसिकानां भेदाः पञ्चविंशतिः भवन्ति। मोहसहगतद्वितीयचित्तेन सह अष्टाविंशतिः चैतसिकानां सम्प्रयोगो दृश्यते।

चैतसिकानाम् आख्यानं प्रदर्शयन् तस्य चतुर्भूमिककुशलाकुशलचित्तैः सह सम्प्रयोगानां विप्रयोगानां तुलनात्मकविवरणमधोलिखितं वर्तते।

चैतसिकाः[2]

| कामावचरः | रूपावचरः | अरूपावचरः | लोकोत्तरः | कामावचरकुशलः | विपाकः |
|---|---|---|---|---|---|
| चितयुक्तः | चितयुक्तः | चितयुक्तः | चितयुक्तः | चितयुक्तः | चितयुक्तः |
| फस्सोः | फस्सोः | फस्सोः | फस्सोः | फस्सोः | फस्सोः |
| वेदना | वेदना | वेदना | वेदना | वेदना | वेदना |
| संज्ञा | संज्ञा | संज्ञा | संज्ञा | संज्ञा | संज्ञा |
| चेतना | चेतना | चेतना | चेतना | चेतना | चेतना |
| चित्तं | चित्तं | चित्तं | चित्तं | चित्तं | चित्तं |
| वितक्को | वितक्को | उपेक्खा | वितक्को | वितक्को | वितक्को |
| विचारो | विचारो | | विचारो | विचारो | विचारो |
| पीतिः | पीतिः | पीतिः | पीतिः | पीतिः | |
| सुखम् | सुखम् | सुखम् | सुखम् | सुखम् | सुखम् |
| चित्तस्सेकग्गता | चित्तस्सेकग्गता | चित्तस्सेकग्गता | चित्तस्सेकग्गता | चित्तस्सेकग्गता | |
| चित्तस्सेकग्गता | | | | | |
| सद्धिन्द्रियं | सद्धिन्द्रियं | सद्धिन्द्रियं | सद्धिन्द्रियं | सद्धिन्द्रियं | |

1. ध.सं.18,29
2. बौ.मनो.152-154

| | | | | | |
|---|---|---|---|---|---|
| विरियिन्द्रियं | विरियिन्द्रियं | विरियिन्द्रियं | विरियिन्द्रियं | विरियिन्द्रियं | विरियिन्द्रियं |
| सतिन्द्रियं | सतिन्द्रियं | सतिन्द्रियं | सतिन्द्रियं | | |
| समाधीन्द्रियं | समाधीन्द्रियं | समाधीन्द्रियं | समाधीन्द्रियं | समाधीन्द्रियं | समाधिन्द्रियं |
| पञ्ञिन्द्रियम् | पञ्ञिन्द्रियम् | पञ्ञिन्द्रियम् | पञ्ञिन्द्रियं | | |
| मनिन्द्रियं | मनिन्द्रियं | मनिन्द्रियं | मनिन्द्रियं | मनिन्द्रियं | मनिन्द्रियं |
| सोमस्सिन्द्रियं<br>सोमस्सिन्द्रियं | सोमस्सिन्द्रियं | उपेक्खिन्द्रियं | सोमस्सिन्द्रियं | सोमस्सिन्द्रियं | |
| जीवितन्द्रियं<br>जीवितन्द्रियं | जीवितन्द्रियं | जीवितन्द्रियं | जीवितन्द्रियं | जीवितन्द्रियं | |
| सम्मादिट्ठिम् | सम्मादिट्ठिम् | सम्मादिट्ठिम् | अञ्ञतस्सामीतिन्द्रियम् | मिच्छादिट्ठिम् | |
| सम्मासंकप्पो<br>मिच्छासंकप्पो | सम्मासंकप्पो | | | सम्मादिट्ठि: | |
| सम्मावायामो | सम्मावायामो | सम्मावायामो | सम्मासंकप्पो | मिच्छावायामो | |
| सम्मासति | सम्मासति | सम्मासति | सम्मावाचा | मिच्छासमाधि: | |
| सम्मासमाधि: | सम्मासमाधि: | सम्मासमाधि: | सम्माकम्मन्तो | | |
| सद्धाबलं<br>सम्माआजीवो | | सद्धाबलं | | सद्धाबलं | |
| विरियबलं | विरियबलं | विरियबलं | सम्मावायामो | | |
| सतिबलं | सतिबलम | सतिबलं | | सतिबलं | सम्मासति |
| समाधि: बलं | समाधि: बलं | समाधि: बलं | सम्मासमाधि: | | |
| पञ्ञाबलं | पञ्ञाबलं | पञ्ञाबलं | | पञ्ञाबलं | सद्धाबलं |
| हिरीबलं<br>विरियबलं | हिरीबलं | हिरीबलं | हिरीबलं | हिरीबलं | विरियबलं |
| ओतप्पबलं | ओतप्पबलं | ओतप्पबलं | सतिबलं | | |
| अलोभो<br>समाध्बिलं | अलोभो | अलोभो | अलोभो | अलोभो | समाधिबलं |
| अदोसो | अदोसो | अदोसो | | अदोसो | पञ्ञाबलं |
| अमोहो | <br>अहिरीबलं | अमोहो | | अमोहो | हिरीबलं |
| अनभिज्झा | अनभिज्झा | अनभिज्झा | ओतप्पबलं | अनोतप्पबलं | |
| अव्यापादो | अव्यापादो | अव्यापादो | अलोभो | लोभो | |
| सम्मादिट्ठि: | सम्मादिट्ठि: | सम्मादिट्ठि: | अदोसो | मोहो | |

| | | | | | |
|---|---|---|---|---|---|
| हिरी | | हिरी | | हिरी | अमोहो |
| | अभिज्झा | | | | |
| ओतप्पं | | ओतप्पं | | ओतप्पं | अनभिज्झा |
| मिच्छादिट्ठि: | | | | | |
| कायपस्सद्धि: | कायपस्सद्धि: | कायपस्सद्धि: | अव्यापादो | अहिरिकं | |
| चित्तपस्सद्धि | चित्तपस्सद्धि | चित्तपस्सद्धि | सम्मादिट्ठि | अनोतप्पं | |
| कायलहुता | कायलहुता | कायलहुता | हिरी | समथो | |
| चित्तलहुता | चित्तलहुता | चित्तलहुता | ओतप्प: | पग्गाहो | |
| कायमुदुता | कायमुदुता | कायमुदुता | कायपस्सद्धि | अविक्खेपो | |
| चित्तमुदुता | चित्तमुदुता | चित्तमुदुता | चित्तपस्सद्धि | | |
| कायकम्मञ्ञता | कायकम्मञ्ञता | कायकम्मञ्ञता | कायलहुता | उपेक्खा | |
| चित्तकमञ्ञता | चित्तकमञ्ञता | चित्तकमञ्ञता | चित्तलहुता | दोसो | |
| कायपागुञ्ञता | कायपागुञ्ञता | कायपागुञ्ञता | कायमुदुता | दुक्खं | |
| चित्तपागुञ्ञता | चित्तपागुञ्ञता | चित्तपागुञ्ञता | चित्तमुदुता | दोमनस्सिन्द्रियं | |
| कायुजुकता | कायुजुकता | कायुजुकता | कायकम्मञ्ञता | दोसो | |
| चित्तुजुकता | चित्तुजुकता | चित्तुजुकता | चित्तकम्मञ्ञता | व्यापादो | |
| सति | सति | सति | कायपागुञ्ञता | विचिकिच्छा | |
| सम्पजञ्ञ | सम्पजञ्ञ | सम्पजञ्ञ | चित्तपागुञ्ञता | छन्दो | |
| समथो | समथो | समथो | कायुजुकता | अधिमोक्खो | |
| विपस्सना | विपस्सना | विपस्सना | चित्तुजुकता | मनसिकरो | |
| पग्गाहो | पग्गाहो | पग्गाहो | सति | मानो | |
| अविक्खेपो | अविक्खेपो | अविक्खेपो | सम्पजञ्ञ | इस्सा | |
| छन्दो | छन्दो | छन्दो | समथो | मच्छरियं | |
| अधिमोक्खो | अधिमोक्खो | अधिमोक्खो | विपस्सना | थीनं | |
| मनसिकारो | मनसिकारो | मनसिकारो | पग्गाहो | मिद्धं | |
| तत्रामज्झत्तता | तत्रामज्झत्तता | तत्रामज्झत्तता | अविक्खेपो | उद्धच्चं | |
| करुणा | करुणा | उपेक्खां | कुक्कुच्चं | | |
| मुदुता | | | उपेक्खिन्द्रियं | | |
| कायदुच्चरितविरति: | | | | | |
| वची | दुच्चरित: | | विरति: | | |
| मिच्छाजीव: | विरति: | | | | |

उपेक्खा उपेक्खा

उपेक्खिन्द्रियं उपेक्खिन्द्रियं

उपयुक्तासु तालिकासु आगणितचैतसिकानामुपरि दृष्टिपातेन प्रतीयते यत् सप्तनवतिः चैतसिकाः भवन्ति। कुशलचित्तैः सह विद्यमानाः चैतसिकाः पञ्चषष्टिः भवन्ति।

**सर्वगामी चैतसिकः**

सर्वचित्तेषु विद्यमानाः चैतसिकाः सर्वचित्तसाधारणाः वा सर्वत्रगामिनः चैतसिकाः इति शब्देन व्यपदिश्यन्ते। ते च सप्त भवन्ति, **फस्सो, वेदना, सञ्ञा, चेतना, जीवितिन्द्रियम्, मनसिकारः, एकाग्रता च**[1]। मनोद्वारे धर्म्मालम्बनस्योपस्थिततत्वात्तस्य कार्येण साक्षात्सम्बन्धो भवति। अस्यां प्रक्रियायां चित्तस्य विषयेण सह प्रथमः अभिलापः वा संसर्गः स्पर्श(फस्स)पदवाच्यो भवति। विषयेण सह इन्द्रियस्य स्पर्शः, इन्द्रियेण सह मनसः स्पर्शः, तदनन्तरं सुखात्मकानुभूतिः, दुखात्मकानुभूतिः, उपेक्षात्मका नुभूतिश्च जायन्ते। तस्या एव नाम वेदना अस्ति। संज्ञाशब्दस्यार्थः ज्ञानं, यदा मनसा सह चक्षुरिन्द्रियस्य, चक्षुरिन्द्रियेण सह पदार्थस्य योगो जायते तदनन्तरं यत् नीलपीतादिकस्य ज्ञानं जायते तस्य अपरं नाम संज्ञा। यः स्वयं वासप्रयुक्तधर्म्मान् विषये सञ्युजनक्ति वा शरीरस्य चेष्टां कारयति सा चेतना भवति। बौद्धनयेषु चैतसिकानामाख्यानं वर्तते। तत्र चित्तं नाम कश्चन चैतसिकोऽस्ति। एकाग्रतापि एको चैतसिको विद्यते। अरूपधर्मरूपधर्मान् या शक्तिः पालयति तस्याः नाम जीवितिन्द्रियमस्ति अनया शक्त्या सर्वे प्राणिनः जीवन्ति। मनसिकारः एका मानसिकवृत्तिः अस्ति। यः धर्मः विषयान् मनसि आवर्जितं करोति सः मनसिकारोऽस्ति। वितर्क एको चैतसिको विद्यते। आरम्भणे चित्तस्य संलग्नीकरणमेव विचारो भवति। अस्मिन् विषये धर्मसंगण्यामुक्तं

**चारो, विचारो, अनुविचारो, चित्तस्स अनुसन्धनता, अनपेक्खनता, अयं तस्मिं समये विचारो होति।**[2]

चित्तस्य आनन्दभावः प्रीतिः अस्ति। प्रीतिः सदृशः एकः अन्यः आह्लादिकचैतसिकः सुखमस्ति।[3] अधिमोक्खः विरिय, छन्दः, श्रद्धा, स्मृतिः, ह्रीः, अलोभः, अद्वेषः, तत्र मध्यस्थता, कायलहुता, चित्तलहुता चेति कुशलचैतसिकाः सन्ति। विरतिः, सम्मावचा, सम्यक् कर्मान्तः, सम्यक् आजीवः, करुणा, मुदिता, प्रज्ञा, अकुशलमानसिकानां प्रवृत्तयः, मोहः, आह्रीक्यम्, अनपत्राप्यम्, उद्धच्चः, लोभः, मिथ्या, मनः, द्वेषः, ईर्श्या, मात्सर्य, कौकृत्यः, स्त्यानं, मृद्धः, विचिकित्सा, चेति चैतसिकाः भवन्ति। व्यवहारः, मनोदशा, सरोवरः, फलं, पृथ्वी, पाषाणः, जलं, पुद्गलः, तमः,

---

1. कथं? फस्सो, वेदना, सञ्ञा, चेतना, एकग्गता, जीवतिन्द्रियं, मनसिकारोचेति सत्तिमे चेतसिका सब्बचित्त साधरणा नाम। (अ.सं.न.टी. पृ.25)
2. ध.सं.पृ.19
3. बौ.मनो., पृ.179

ज्योतिः, वृक्षः, पद्मं, कुम्भः, मूषिकः, वृषभः, आसीविशः, कासिकवत्थः, पोत्थकः, धम्मपसन्नो, चेत्यादयः चैतसिकेषु उपयोगिनः वा धर्म्माः भवन्ति।

## सत्वावासभूमिः चित्तस्य अवस्था च

बौद्धधर्मानुसारं सत्त्वानाम् आवासस्य भूमयः तिस्रः भवन्ति। कामावचरभूमिः, रूपावचरभूमिः, अरूपावचरभूमिश्च। कामावचरभूमिः द्विविध अपायभूमिः, कामसुगतिभूमिश्च। अपायभूमिः चतुर्विधो भवति। निरयभूमिः, तिरच्छानयोनिभूमिः, पेत्तिविशयोभूमिः, असुरकायभूमिश्च। कामसुगतिभूमेः सप्त भेदाः भवन्ति। तथा च कामावचरभूमेः एकादशभेदाः भवन्ति। भूम्यन्तरं रूपभूमिः वर्तते। तस्याः षोडशभेदाः भवन्ति एवञ्च रूपावचरषोडशभूमयः भवन्ति।[25] ध्यानभूमिः, द्वितीयध्यानभूमिः, तृतीयध्यानभूमिः, चतुर्थध्यानभूमिश्च। प्रथमध्यानभूमिः त्रिविधो भवति। ब्रह्मपारिसज्जदेवलोकोभूमिः, ब्रह्मपुरोहितदेवलोकभूमिः, महाब्रह्मदेवलोकभूमिश्च। परिताभादेवलोकभूमिः, अप्पमाणाभादेवलोकभूमिः, आभास्सरदेवलोकभूमिश्च द्वितीयध्यानभूमेः भेदो भवति। परीतस्सुभदेवलोकभूमिः, अप्पमाणसुभदेवलोकभूमिः, सुभकिण्हदेवलोकभूमिश्चेति तृतीयध्यानभूमेः भेदोऽस्ति। चतुर्थध्यानभूमिः त्रिविधो भवति, वेहप्फलदेवलोकभूमिः, असञ्ञसत्तदेवलोकभूमिः, सुद्धावासदेवलोकभूमिश्चेति। सुद्धावासभूमिः पञ्चविधो भवति। अविहादेवलोकभूमिः, अतप्पादेवलोकभूमिः, सुदस्सादेवलोकभूमिः, सुदस्सीदेवलोकभूमिः, अकनिट्ठदेवलोकभूमिश्चेति। अरूपावचरभूमेः चत्वारः भेदाः भवन्ति, आकाशानञ्चायत-अरूपभूमिः, विञ्जाणञ्चायतन-अरूपभूमिः, अकिञ्चञ्ञायतन-अरूपभूमिः, नेवसञ्ञानासञ्ञयतन-अरूपभूमिश्चेति, एतासां भूमीनां प्राप्तिः कर्मानुसारं भवति। मनुष्यजीवनस्य ज्ञानार्थ चित्तवीथीनां ज्ञानमावश्यकं भवति। यथा समुद्रे तरंगानि जायन्ते तथैव मानवचित्ते चैतसिकाः, चित्तवीथयः भवन्ति। यथा जाग्रदवस्थायां चित्तवीथयः भवन्ति तथैव सुषुप्त्यवस्थायां, मूर्छावस्थायाञ्च प्रवाहमानाः भवन्ति। चित्तवीथीसमुदाय एव मनुष्याणां जीवनं वर्तते। अनेन मार्गेण मनुष्यानां प्रवृत्तेः ज्ञानं जायते। अत्रो वीथीशब्दार्थः मार्गः। चित्तवीथीनां ज्ञानाभावे मानवचित्तस्य व्यापाराणां ज्ञानं न भवितुमर्हति। वीथिः द्विविधो भवति, पञ्चद्वारवीथिः, मनोद्वारवीथिश्च। पञ्चद्वारवीथिस्तु इन्द्रियाणां माध्यमेन विषयाणां ज्ञानं जायते। मनोद्वारवीथिस्तु साक्षात्मनसा विषयाणां ज्ञानं जायते। अत एव उक्तम्-

**वीथिचित्तानि सत्तेव चित्तुप्पादा चतुद्दस।**
**चतुपञ्ञास वित्थारा पंचद्वारे यथारहं॥**[26]

## निरोधसमाप्तिः चित्तञ्च

बौद्धसाधना त्रिभिः पादैः उपेता वर्तते। शीलपादः, समाधिपादः, प्रज्ञापादश्च। शीलेन कायिकाध्याचाराणां, वाचिकाध्याचाराणां च निषेधो भवति। समाधिपादैः चित्तचाँचल्यराहित्योपलब्धिकरणं

1. मनुस्सा, चातुम्महाराजिका, तावतिंस, यामा, तुसिता, निम्मानरति, परनिम्मितवसवत्ती चेति कामसुगतिभूमि सत्तविध होति (सा पनायमेकादसविध पि कामावचरभूमिच्चेव संखं गच्छति।(अ.सं.न.टी., पृ.87)
2. अ.सं.न.टी.पृ.71

भवति। प्रज्ञया धर्म्मस्वभावप्रतिवेधनं निर्वाणस्य साक्षात्करणञ्च भवति। अनेन क्रमेण आनुपूर्विकाध्यात्मिकविकासोन्मुखतया इयं साधना चरमोत्कर्षो जायते। साधनायां निरोधसमाप्तिः एका यौगिकावस्था वर्तते। इयं प्रज्ञा भावनया लब्ध लोकोत्तरसमाधिः अस्ति। निरोधसमाप्तिशब्दस्यार्थः निरोधस्य प्राप्तिः। कायिकवाचिकमानसिकप्रवृत्तीनां त्रिविधचित्तसंस्काराणाञ्च पूर्णतः निरूद्धत्वे सति यस्याः अवस्थायाः प्राप्तिर्भवति, सा निरोधसमाप्तिः इति।

**निर्वाणस्यावस्था चित्तञ्च**

बौद्धसाधनानुसारं जीवनस्य चरमोत्कर्षो वर्तते निर्वाणस्य प्राप्तिः। मनुष्यः यदा परिशुद्धचित्तस्य योगात् योगावचरलोकोत्तरभूमौ प्रविशति तस्याः भूमेः सञ्ज्ञा निर्वाणक्षेत्रां भवति। अत्रैव निर्वाणस्य दर्शनं भवति। तस्याम् अवस्थायां स्रोतापन्नं चित्तं, सकृदागामीचित्तं, अनागामीचित्तम् अथ च अर्हत् चित्तं जायते। लोकोत्तरभूमौ संयोजनप्रहाणे सति चित्तसन्ततौ रूपरागः, अरूपरागः, मानम्, उद्धच्च, अविज्जा, चेति पञ्चसंयोजनानि भवन्ति। तेषां समूलनाशे सति यस्याः अवस्थायाः प्राप्तिर्भवति सा अर्हत्वमिति। अत एवोक्तम्:-

**अभेदिकायो निरोधि सञ्ञा, वेदनापि ति दहंसु सब्बा।**
**वुपसमिसुं सङ्खारा, विञ्ञाणं अत्थं अगमा ति।।[3]**

**विञ्ञाणं अनिदस्सनं, अनन्तो सब्बतो पभं**
**यत्थ आपो च पथवी, तेजो वायो न गाधति**
**एत्थं दीघं च रस्सं च, अणु थूलं सुभासुभं।**
**एत्थ नामं च रूपं च, असेसं उपरूज्झति।**
**विञ्ञाणस्स निरोधेन, एत्थेतं उपरूज्झतीति।[2]**
**अच्ची यथा वातवेगेन खित्तो, अत्थं पलेति न उपेति संखं।**
**एवं मुति नाम काया विमुत्तो, अत्थं पलेति न उपेति संखं।**
**खीणं पुराणं नव नत्थि संभवं, विरत्तचित्तं आयतिके भवस्मिं।**
**ते खीण वीजा अवरुल्हि छन्दा, निब्बन्ति धीरा यथायंपदीपो।[1]**

बौद्धसिद्धान्तानामध्ययनेन इदं वक्तुं शक्यते यत् भगवान् बुद्धः समाधिमाश्रित्य यदनुभूतवान् तस्यैव वर्णनं सः कृतवान्। बौद्धग्रन्थेषु चित्तस्य याः अवस्थाः वर्णिताः सन्ति, ताः सर्वाः आश्रित्य इदं वक्तुं शक्यते यत् बौद्धमनोविज्ञानं मनुष्याणां जीवने यत् किमपि भवति तस्य निरूपणं करोति। अथ च शरीरसंरचनायाः चित्तस्य चैतसिकानां च वर्णनं सम्यक् रूपेण करोति। बौद्धमनोविज्ञानस्य अध्ययनेन सामाजिककुरीतीनां निराकरणं भवितुमर्हति।

1. द्र., पृ. 95
2. दी.नि., भा., पृ. 190
3. सु.नि., पृ.24

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर 2018 वर्षः 43, तृतीयाङ्कः

# सांख्यवेदान्तदर्शनयोः सृष्टिनिरूपणम्

डॉ.शिवकुमारमिश्रः*

**राष्ट्रेषु भारतं रम्यं रम्यः संस्कृतवाङ्मयः।**
**तत्रापि संस्कृतिर्रम्या यत्र जाता मनीषिणः॥**

**भाषैका भारतीयानां देवभाषेति भण्यते।**
**स्वतः संस्कारयुक्तत्वात्संस्कृतं चापि कथ्यते॥**

**भावात्मिकैकतास्माकी संस्कृतेनैव रक्षिता।**
**तस्मात्संस्कृतभाषायाः स्वाध्यायः प्रविधीयताम्॥**

**दर्शनं भारतस्यैव सर्वथा सारगर्भितम्।**
**प्रासंगिकं समायाति समस्ते विश्व-मण्डले॥**

तथास्तु।

भारतीयदर्शनेषु सृष्टिविषयकं, सम्यक् प्रतिपादनं विहितम्। तत्र विशेषतः आस्तिकदर्शनस्य विभिन्नसम्प्रदायेषु विविधानि मतानि प्रकटीकृतानि। तेषु मतेषु कुत्रचित् परमाणुकारणवादः प्रतिपादितः कुत्रचिच्च सत्कार्यवादो विवेचितः पुनः क्वचित् परिणामवादः प्रतिपादितस्तु क्वचित् विवर्त्तवादो निरूपितः।

**असदकरणादुपादाणग्रहणात् सर्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥**[1]

अनेनैव प्रकारेण क्वचित् द्वैतवादस्य प्राधान्यं समवलोक्यते तु क्वचित् अद्वैतवादविशिष्टाद्वैत-वादादयः 'सिद्धान्ताः समालोचिताः एतेषु सृष्टिविषयकसिद्धान्तेषु सत्कार्यवादं परिणामवादं वा आधृत्य सांख्यदर्शनं द्वैतवादे प्रतिष्ठापितं विद्यते अन्यतः यद्यपि वेदान्तदर्शनस्य विभिन्नम्प्रदायेषु विभिन्नानि मतानि प्रतिपादितानि तथापि मूलतः सर्वत्रैव अद्वैतवादस्यैव पराकाष्ठा प्रतिभाति। इत्थं च सांख्यवेदान्तप्रतिपादितानां सृष्टिविषयकसिद्धान्तानां सम्यक् तुलनात्मकं विश्लेषणमेव प्रकृतनिबन्धस्य प्रयोजनीयत्वं विद्यते।'

---

* संस्कृत विभागाध्यक्षः, कुँवरसिंहमहाविद्यालयः, ल०ना०मिथिलाविश्वविद्यालयः, लहेरियासरायः, दरभंगा, बिहार-846003

1. सांख्यकारिका -9

सृष्टिनिरूपणक्रमे प्रथमतः सकलप्रपंचस्य निमित्तकारणम् उपादानकारणं च विविच्येते। सांख्यदर्शने प्रकृतिपुरुषयोः संयोगेन सृष्टिर्भवति। तत्र पुरुषस्य कैवल्यरूपप्रयोजनार्थं प्रकृतेश्च भोग्यत्वस्य दृश्यत्वस्य वा सिध्यर्थं दर्शनेऽस्मिन् अनयोः प्रकृतिपुरुषयोः संयोगः भवति ततः सृष्टिः संजायते।

सांख्यदर्शनानुसारं केवलं प्रकृतिः स्वलक्ष्यं प्राप्तुं न शक्नोति न च पुरुषोऽपि प्रकृतिं विना स्वकीयं लक्ष्यं प्राप्तुं शक्नोति।[1] वस्तुतः अनयोः परस्परसंयोगेनैव सृष्टिविषयकं प्रयोजनं सिध्यतीति सांख्यकारिकायाम् ईश्वरकृष्णेन स्पष्टं निगदितम्-

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पंग्वन्धवदुभयोरपिसंयोगस्तत्कृतः सर्गः॥**[2]

परन्तु वेदान्तदर्शने किंचिद् वैषम्यं दरीदृश्यते। तत्र मूलतः निमित्तोपादानकारणत्वेन ब्रह्म एव स्वीक्रियते। 'यतो वा इमानि भूतानि जायन्ते', ''यस्मिन् प्रयन्यभिसंविशन्ति''[3] इत्याद्युपनिषद्वाक्ये ब्रह्म एव सृष्टेः उपादानकरणं सिध्यति। पुनः ''तदैक्षत बहुस्याम् प्रजायेय'' इत्यादिवाक्यैः निमित्तकारणमपि ब्रह्म एव सिध्यति। अर्थात् यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं भवति तथा स्वशरीरप्रधानतया उपादानं भवति वर्णितश्च -

**यथोऽर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्॥**[4]

अतः परं निमित्तोपादानकारणनिरूपणानन्तरं सकलप्रपंचस्य सृष्टेः निरूपणं विधीयते। अस्मिन् क्रमे प्रसंगतः सांख्यप्रतिपादितप्रकृतिपुरुषयोः स्वरूपं विश्लिष्यते। मूलप्रकृतिरियम् अपरिमिता अव्यक्ता, स्वतन्त्रा, त्रिगुणात्मिका विश्वसृष्टिक्षमा विद्यते। इयम् सत्तवरजस्तमसां साम्यावस्था वर्त्तते। सृष्टौ प्रकृतिरूपकारणात् समस्तविश्वं विभक्तमिव प्रतीयते। परन्तु प्रलयावस्थायां समस्तविश्वम् अस्यामेव मूलप्रकृतौ विलीयते तदा समस्तविश्वं प्रकृतिरूपकारणात् अविभक्तमिव प्रतिभाति। पुनः सांख्यदर्शनानुसारं यावन्तः सन्ति सावयवाः संघातात्मकाश्च पदार्थाः ते सर्वे परार्थाः एव सिध्यन्ति। स एव प्रकृत्यतिरिक्तः पुरुषः विद्यते। एतादृशस्य पुरुषस्य कैवल्यस्य प्रयोजनार्थमेव त्रिगुणात्मकं समस्तविश्वं प्रवर्त्तते। वस्तुतः मूलप्रकृतेः त्रिगुणत्वस्य सिद्धान्तः सांख्यदर्शनस्य मौलिकं चिन्तनं वर्त्तते। चिन्तनमिदं सूक्ष्मं वैज्ञानिकंचेति सर्वथा स्वीकर्तुं शक्यते।

शंकराचार्येण वेदान्तदर्शनस्य प्रतिष्ठापितमेतन्मतं विवर्त्तवादे आधृतं विद्यते। मतमिदं वेदान्तदर्शनस्य सर्वोत्कृष्टं सर्वव्यापकञ्च स्वीक्रियते। एतन्मतानुसारं जीव एव ब्रह्म विद्यते तथा समस्तो प्रपंचः अस्य ब्रह्मणः मायामयं विद्यते। अर्थात् सम्पूर्णजगत् ब्रह्मणः विवर्तमात्रमेव तिष्ठति। यथा सर्पः रज्जोः विवर्त्तः तथैव जगदपि ब्रह्मणः विवर्त्तः। अस्य ब्रह्मणः अज्ञानशक्तिः द्विविद्या विद्यते- आवरणशक्तिः

1. सांख्यकारिका -9
2. सांख्यकारिका -21
3. तैत्तिरीयोपनिषद् बल्ली-3 , अनुवाक -1
4. मुण्डकोपनिषद् -1/1/7

विक्षेपशक्तिश्चेति अज्ञानम् आवरणशक्त्या वस्तुतः स्वरूपमावृणोति विक्षेपशक्त्या च तस्मिन् आवृत्तवस्तुनि अवस्तुनः आकाशादिप्रपञ्चस्य सृष्टिं विदधाति।[1]

वेदान्तदर्शनस्य सिद्धान्तेषु रामानुजेन प्रतिपादितं विशिष्टाद्वैतमतं महत्त्वपूर्णं विद्यते, अतएव सृष्टिविश्लेषणक्रमे अस्यापि विवेचनं प्रासंगिकं प्रतिभाति। अद्वैतवादः विवर्त्तवादे प्रतिष्ठापितो विद्यते परन्तु विशिष्टाद्वैतवादः परिणामवादे प्रतिष्ठापितो वर्त्तते। विशिष्टाद्वैतस्य परिणामवादानुसारं यथा कारणं सत् विद्यते तथैव कार्यमपि सदेव सिध्यति। अर्थात् रामानुजस्य मतानुसारं ब्रह्मणः सृष्टिः समस्तजगत्प्रपञ्चोऽपि सत्य एव विद्यते। कार्यप्रपञ्चोऽपि ब्रह्मणः परिणाम एव। अतएव व्यष्टिरूपेण समष्टिरूपेण वा जगदिदं सत्यं सिध्यति।[2]

सांख्यदर्शनानुसारमिव मूलप्रकृतेः सृष्टिः रामानुजेनापि स्वीक्रियते परन्तु अनयोः पार्थक्यमिदमेव वर्त्तते यत् सांख्यदर्शने मूलप्रकृतिः स्वतन्त्रा विद्यते, परन्तु विशिष्टाद्वैतानुसारं मूलप्रकृतिः ब्रह्मणो अंशो विद्यते। तस्य ब्रह्मणः इच्छानुसारमेव प्रलयकाले मूलप्रकृतेः त्रिगुणत्वस्य या साम्यावस्था विद्यते सा सृष्टेः प्रारम्भे वैषम्यावस्थायां परिणमते। फलतः गुणवैषम्यात् वैषम्यावस्थायां विद्यमानप्रकृतेः महदादिक्रमेण चराचरसंसारस्य सृष्टिः संजायते। अतएव भगवता श्रीकृष्णेन भणितम्– ''मयाध्यक्षेण प्रकृतिः सूयते च चराचरम्''[3] अनेन प्रकारेण विशिष्टाद्वैतानुसारं सृष्टिः सत्ख्यातिवादम् आश्रयते।

पुनः मध्वाचार्येण प्रतिपादिताद्वैतदर्शनानुसारं सृष्टेः उपादानकारणं प्रकृतिः विद्यते निमित्तकारणं ईश्वरः वर्त्तते। प्रकृतिरियं त्रिगुणात्मिका विद्यते। पुनः अस्या त्रिगुणात्मकप्रकृतेः समस्तविश्वस्य सृष्टिः महदादिक्रमेण सांख्यदर्शनानुसारमेव भवति। अतएव सांख्यप्रतिपादितद्वैताद्वैतमतानुसारमपि त्रिगुणात्मकप्रकृतेः एव सकलप्रपञ्चस्य सृष्टिः सञ्जायते। अत्रापि गुणवैषम्यात् साम्यावस्थायां परिणमते। फलतः महदादिक्रमेण सृष्टिः प्रारभते। इत्थं द्वैताद्वैतमतानुसारमपि सृष्टिक्रमः प्रायः सांख्यदर्शनानुसारमेव प्रतिभाति।

बल्लभाचार्येणाप्रतिपादित शुद्धाद्वैतमतानुसारम् परमात्मनः इच्छया एव त्रिगुणात्मिकायाः प्रकृतेः समस्तविश्वस्य सृष्टिः सञ्जायते। सृष्टिनिरूपणं प्रायः सांख्यदर्शननुसारमेव विद्यते। किन्तु अनयोः किञ्चिद् वैषम्यं विद्यते। बल्लभाचार्यप्रतिपादितपरिणामवादः अविकृतकोटिकः विद्यते परन्तु सांख्यप्रतिपादितः परिणामवादः विकृतपरिणामवादः प्रतिभाति। अनेनैव प्रकारेण भाष्कराचार्यप्रतिपादितसृष्टिविषयकः सिद्धान्तः स्वतः परिणामवादे प्रतिष्ठापितो विद्यते। अतएव निगदितम्–

**ब्रह्म स्वत एव परिणमते तत्स्वाभाव्यात् यथा।**
**क्षीरं दधिभावाय अम्भो हिमभावाय।।**[4]

अतः परं सांख्यवेदान्तयोः संक्षेपतः सृष्टिनिरूपणपुरस्सरम् अनयोः सृष्टिविषयकं तुलनात्मकं विश्लेषणं विधीयते।

---

1. वेदान्तसार–15
2. गीता –9/10
3. भास्कर भाष्य –2/1/24
4. रामानुजदर्शनम् पृ0 –30

सांख्यदर्शनानुसारं त्रिगुणात्मिकाया: प्रकृते: द्विविधावस्था भवति- अव्यक्तावस्था व्यक्तावस्था चेति। तत्र सत्वरजस्तमासीत्येते गुणा: यदा अन्तर्मुखत्वेन वर्त्तन्ते तदा साम्यावस्था भवति पुन: पुरुषस्य सम्पर्केण यदा एते त्रयो गुणा: बहिर्मुखिन: सञ्जायन्ते तदा तेषु गुणवैषम्यात् परम्परम् आकर्षणविकषर्णयो: प्रक्रिया प्रारभते, फलत: सृष्टि: सञ्जायन्ते-

**रागविरागयोर्योग: सृष्टि:**[1]

अस्मिन् क्रमे कदाचित् सत्त्वगुणस्य प्राबल्यं भवति, कदाचित् रजोगुणस्य कदाचिच्च तमोगुणस्य प्राधान्यं भवति। सत्त्वगुणस्य प्रधान्येन महत्तत्वमाविर्भवति पुन: यदा महत्तत्वेऽस्मिन् तमोगुणस्य प्राबल्यं भवति तदा अहंकार: आविर्भवति। अस्मादहंकारात् क्रमश: एकादशेन्द्रियाणि पंचतन्मात्राणि चाविर्भवन्ति। आभि: पंचतन्मात्राभि: पंचभूतानि आविर्भवन्ति। अनेनैव प्रकारेण ''सांख्यप्रवचनसूत्रेऽपि'' सृष्टिप्रक्रियाया: उल्लेखो विहित:- ''सत्त्वरजस्तमसां साम्यावस्था प्रकृति: प्रकृतेर्महान् महतोऽहंकारोऽहंकारात् पंचतन्मात्राणि उभयमिन्द्रियं तन्मात्रेभ्य: स्थूलभूतानि-''[2] इत्थं च, सत्कार्यवादे प्रतिष्ठापितस्य सांख्यप्रतिपादितसृष्टे: आविर्भाव तिरोभावस्य च क्रमोऽयं वर्त्तते। वेदान्तदर्शनानुसारं तमोगुणप्रधानविक्षेपशक्ति: विशिष्टचैतन्यात् सूक्ष्माकाशोत्पद्यते, आकाशाद्वायुरूत्पद्यते, वायोरग्निरूत्पद्यते, अग्नेराप: उत्पद्यन्ते अद्भ्यश्च पृथिवी उत्पद्यते। अस्य समर्थनं तैत्तिरीयोपनिषदि चापि विहितम्-

**तस्माद्वा एतस्मादात्मन: आकाश: सम्भूत:**[3]

वेदान्तदर्शनस्य 'सृष्टिविषयकं वैशिष्ट्यं पंचीकरणं विद्यते। अर्थात् आकाशादिसूक्ष्मभूतेभ्य: स्थूलभूतानि पंचीकरणप्रक्रियया उत्पद्यन्ते। अस्यां पंचीकरणप्रक्रियायां प्रत्येकभूतस्य अर्धांश भवति तथा अवशिष्टानां चतुर्णां भूतानाम् अष्टमांश: भवति।' अनेन प्रकारेण स्थूलभूतानि पंचीकृतानि संजायन्ते।[4]

निष्कर्षत: सांख्यवेदान्तदर्शनयो: सृष्टिविषयकतुलनात्मकविश्लेषणेन तथ्यानि इमानि समायान्ति यत् सांख्यदर्शनं मूलत: द्वैतवादी विद्यते परन्तु वेदान्तदर्शनम् मूलत: अद्वैतवादी विद्यते। एकत: सांख्यदर्शनं परिणामवादे प्रतिष्ठापितं विद्यते तु अन्यत: वेदान्तदर्शनं कुत्रचित् विवर्तवादे कुत्रचिच्च अविकृतपरिणामवादे प्रतिष्ठापितं प्रतिभाति। तात्पर्यमिदमस्ति यत् सांख्यदर्शने सत्कार्यवादस्य द्वैतवादस्य च प्राधान्यं विद्यते परन्तु वेदान्तदर्शने विवर्त्तवादस्य अद्वैतवादस्य च प्राबल्यं दरीदृश्यते। पुन: पंचीकरणप्रक्रिया वेदान्तदर्शनस्य मौलिकं तथ्यं विद्यते। एतदतिरिक्तं सांख्यदर्शनानुसारं निमित्तकारणम् अज्ञानं वर्त्तते तथा उपादानकारणं मूलप्रकृतिर्विद्यते परन्तु वेदान्तदर्शनानुसारं ब्रह्म एव निमित्तोपादानकारणत्वेन स्वीक्रियते। अतएव सांख्यप्रतिपादितसृष्टिनिरूपणं मूलत: वैज्ञानिकं विद्यते किन्तु वेदान्तप्रतिपादितसृष्टि-निरूपणं मूलत: आध्यात्मिकं प्रतिभातीति शम्।

---

1. तत्त्वकौमुदी का0 5
2. सांख्यप्रबवन भाष्य-1/6
3. वेदान्तसार: पृ0 28
4. पञ्चीकरणवार्तिकम् -2/10

ISSN - 0974-8946
जुलाई-सितम्बर 2018

शोधप्रभा
वर्षः 43, तृतीयाङ्कः

# स्मृतिवाङ्मये राजधर्मचिन्तनम्

डॉ.दयालसिंहपँवारः*

## 1. भूमिका -

संस्कृतवाङ्मये याः विविधाः परम्पराः प्रवर्तन्ते, तासु धर्म-शास्त्र-परम्परा नितरां महत्त्वाधायिनी वर्तते। एषा स्मृति-परम्परात्वेन लोके प्रसिद्धा। "धर्मशास्त्रं तु वै स्मृतिः" इति मनुवाक्यं लोके प्रसिद्धम्। अस्याः महनीयायाः परम्पराया इदं वैशिष्ट्यं यदद्यापि ये लोकव्यवहाराः, मान्यताः, संस्काराश्च भारतीये जीवने दृश्यन्ते, ते सर्वे प्रायशः स्मार्त-पौराणिक-परम्परानुसारेणैव प्रवर्तन्ते। वक्तुं शक्यते यदस्मिन्नाधुनिके परिवेशेऽपि भारतीयं जनजीवनं धर्मशास्त्रैर्न्यूनाधिकतया नियम्यते।

एषा धर्मशास्त्रपरम्परा अस्माकं जीवनस्य विविधैः पक्षैः सह घनिष्ठतया सम्बद्धा वर्तते। इदमेव कारणं वर्तते यद् धर्माचरणं, दण्डनीतिः, समाज-व्यवस्था, पैत्रिक-सम्पत्तिः, आर्थिक-चिन्तनं चेत्यादयो जीवनस्य ये विविधाः पक्षास्तेषां समावेशः अस्मिन् ग्रन्थ-राशौ प्राप्तुं शक्यते। जीवनेन सह घनिष्ठतया सम्बद्धत्वादेव स्मृतिग्रन्थानां सङ्ख्या शताधिका जाता।

## 2. राजधर्म-प्रतिपादनस्यौचित्यम् -

अस्माकं या शास्त्रीया परम्परा वर्तते, तदनुसारेण राजधर्म-विचारः प्रामुख्येण दण्डनीतेः राजनीतेर्वा विषयो वर्तते। एवं सत्यपि मानवधर्मप्रतिपादकतया, समाजस्य प्रधानघटकतया च राज्ञो धर्माणामिह प्रतिपादनस्यौचित्यमेव प्रतीयते। अपि च, प्राचीनकाले सर्वमेव समाजतन्त्रं धर्माच्छन्नमेवासीत्। तस्मादेव अद्यापि धर्मतन्त्रं राजतन्त्रात् पृथक् स्यान्न वा इति विषयो विवादास्पदं वर्तते। इदमेव कारणं यन्मनु-याज्ञवल्क्य-विष्णु-कात्यायनादि-स्मृतिषु राजधर्मः तदीय-प्रधानविषयत्वेन राजते। को नाम राजधर्म इत्यस्मिन् विषये उच्यते **"धर्म-शब्दोऽत्र दृष्टादृष्टानुष्ठेयपरं षाड्गुण्यादेरपि वक्ष्यमाणत्वात्"**[1] अनेन स्पष्टं यद् दृष्टादृष्टार्थयोः क्षेत्रं व्यापकम्। शासन-व्यवस्था, दण्डनीतिः, यज्ञाद्यनुष्ठानानि इत्यादीनि सर्वाणि राजकर्माण्यत्र सङ्गच्छन्ते।

## 3. सामाजिकानुबन्ध-सिद्धान्तः -

राज्योत्पत्तेः प्राक् समाजे कीदृशी व्यवस्थासीदित्यस्मिन् विषये पाश्चात्यदर्शने द्विविधो विचारो दृश्यते। जॉनलॉक-महोदयानुसारेण राज्योत्पत्तेः प्राक् सर्वा व्यवस्था सुखदासीत्, परं हाब्स-महोदयानुसारेण

---

* सहाचार्यः, व्याकरणविभागो, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. मन्वर्थमुक्तावली 7/1

राज्योत्पत्तेः पूर्व व्यवस्था दुःखकरी आसीत्। मात्स्य-न्यायभिभूतायां व्यवस्थायां सबलैर्दुर्बलाः पीड्यन्ते स्म। हाहाकार-सङ्कुलायामस्यां दशायां कश्चन सामाजिकोऽनुबन्धो बभूव। तदनुसारेणैव राज्यस्य राज्ञश्चाविर्भावो जातः। सामाजिकानुबन्धस्यायमेव ध्वनिः मनु-स्मृतावन्येषु च शास्त्रेषु श्रोतुं शक्यते। आचार्य-मनोरनुसारेण भयाक्रान्तस्य लोकस्य त्राणार्थमेव परमेश्वरो राजानमसृजत्। तद्यथा -

**अराजके हि लोकेस्मिन् सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः॥**[1]

यद्यप्यत्र दैवी सिद्धान्त एव प्रामुख्यं धत्ते परमन्यत्र शास्त्रान्तरेषु क्वचिच्चर्चा प्राप्यते यत् प्रजाः मनुमेत्य तेषां राजा भवितुं प्रार्थयामासुः।

**4. राजोत्पत्तिस्तदीया गुणाश्च -**

अस्माभिः पूर्वमेवोल्लिखितं यत् प्रायशः स्मृतिकृद्भिराजोत्पत्ति-विषये दैवी सिद्धान्त एवाङ्गीकृतः। तदनुसारेण इन्द्राद्यष्टदिक्पालानामंशैः राजासृज्यत। तथा हि -

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः॥**[2]

इन्द्राद्यष्टदिक्पालोत्पत्या स्मृतिकारस्यायं सन्देशो यद् राज्ञि इन्द्रसदृशः पराक्रमः, वायुसदृशी सम्प्रेषणीयता, यमसदृशी दण्ड-क्षमता, सूर्यसदृशी ओजस्विता, अग्निसदृशी तेजस्विता, वरुण-सदृशी न्याय-क्षमता, चन्द्र-सदृशी प्रजावात्सल्योचिताह्लादकता, कुबेरसदृशी च धनाढ्यता स्यात्। इदं तु वयं जानीम एव यद् राजतन्त्रे वंशानुक्रमपरम्परया राज्ञः पुत्र एव राजा भवति। एवं सत्यपि राजसु केचन गुणाः, पात्रताश्चापेक्ष्यन्ते। एतद्विषये याज्ञवल्क्य आह -

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः**
**विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः।**
**अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्॥**[3]

**5. दण्ड-व्यवस्था -**

राजधर्मप्रतिपादनप्रसङ्गे स्मृतिकारैर्दण्डस्य यन्माहात्म्यं प्रतिपादितं, तत्प्रभावेणैव सर्वोऽपि राजनयो दण्डनीति-नाम्ना प्रसिद्धिमगात्। इदमुल्लेखनीयं यन्मनु-विष्णु-स्मृत्योः श्यामत्वेन लोहिताक्षत्वेन

---

2. मनु.7/3
3. मनु.7/4
4. याज्ञ. 1.309-310

च दण्डस्य भयोत्पादकत्वं दृश्यते। तद्यथा –

**यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः।**
**प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यति।।**[1]

वस्तुतः दुष्टान् दण्डयितुं प्रजाश्च पालयितुं दण्डस्य महती आवश्यकतात्राङ्गीकृता। "दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति" "सर्वो दण्डजितो लोको" इत्यादिभिरुक्तिभिः मनुना दण्डस्यापरिहार्यता घोषिता। राजधर्मस्य सम्यक्प्रकारेण पालने दण्डो महत्त्वाधायी वर्तते। तदभावे मात्स्य-न्याये प्रवृत्ते सबलाः दुर्बलानामुत्पीडनं कुर्युः। मनुमतानुसारेण किं मानवा अपितु देवदानवगन्धर्वा अपि दण्डवशेनैव-स्व-स्वभोगाय कल्पन्ते। अत्र स्मृतिकाराणामयं निर्देशः महत्त्वाधायी वर्तते यद्दण्डविधानप्रसङ्गे दण्डनीयस्य जनस्य देशकालयोग्यतां विचार्यैव दण्डः प्रवर्तनीयः। दण्डाभावे कीदृशी स्थितिः स्यादित्यस्मिन् विषये मनुराह –

**दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः।**
**सर्वलोकप्रकोपश्च भवेद्धर्मस्य विभ्रमात्।।**[2]

### 6. मन्त्रिपरिषदादि-नियुक्तिः –

राज्यसञ्चालनार्थं राजधर्मपालनार्थं मन्त्रिपरिषदो नियुक्तिविषये विविधस्मृतिषु पर्याप्तो विचारो दृश्यते। अत्र सप्त अष्टौ वा विविधगुणोपेता मन्त्रिणः स्युः। तथा हि –

**मौलाञ्छास्त्रविदः शूरान् लब्धलक्ष्यान् कुलोद्भवान्।**
**सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्।।**[3]

अस्यातिरिक्तं धर्मानुष्ठानार्थं पुरोहितस्य, सन्धिविग्रहाद्यर्थं दूतस्य,अन्येषां चाधिकारिणां योग्यतां वीक्ष्य राज्ञा नियुक्तिः करणीया। ग्रामप्रशासनार्थमपि ग्रामाधिपत्यादीनां नियुक्तेर्निर्देशाः स्मृति-ग्रन्थेषु प्राप्यन्ते।

### 7. कर-ग्रहणम् –

करग्रहणस्यापि व्यवस्था अत्यन्तमेव प्राचीना वर्तते। प्रजानां परिपालनार्थं ताभ्यो बलिर्गृह्यत इति प्रसिद्धो धर्मशास्त्रीयः सिद्धान्तः। राजा भूस्वामी भवति, अतस्तन्निवासित्वात् करदानं प्रजानां कर्तव्यम्। तथा हि –

---

1. विष्णु.3.95
2. मनु.7.24
3. मनु.7.54

राज्योत्पत्तेः पूर्व व्यवस्था दुःखकरी आसीत्। मात्स्य-न्यायभिभूतायां व्यवस्थायां सबलैर्दुर्बलाः पीड्यन्ते स्म। हाहाकार-सङ्कुलायामस्यां दशायां कश्चन सामाजिकोऽनुबन्धो बभूव। तदनुसारेणैव राज्यस्य राज्ञश्चाविर्भावो जातः। सामाजिकानुबन्धस्यायमेव ध्वनिः मनु-स्मृतावन्येषु च शास्त्रेषु श्रोतुं शक्यते। आचार्य-मनोरनुसारेण भयाक्रान्तस्य लोकस्य त्राणार्थमेव परमेश्वरो राजानमसृजत्। तद्यथा -

**अराजके हि लोकेस्मिन् सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः।।**[1]

यद्यप्यत्र दैवी सिद्धान्त एव प्रामुख्यं धत्ते परमन्यत्र शास्त्रान्तरेषु क्वचिच्चर्चा प्राप्यते यत् प्रजाः मनुमेत्य तेषां राजा भवितुं प्रार्थयामासुः।

**4. राजोत्पत्तिस्तदीया गुणाश्च -**

अस्माभिः पूर्वमेवोल्लिखितं यत् प्रायशः स्मृतिकृद्भिराजोत्पत्ति-विषये दैवी सिद्धान्त एवाङ्गीकृतः। तदनुसारेण इन्द्राद्यष्टदिक्पालानामंशैः राजासृज्यत। तथा हि -

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः।।**[2]

इन्द्राद्यष्टदिक्पालोत्पत्या स्मृतिकारस्यायं सन्देशो यद् राज्ञि इन्द्रसदृशः पराक्रमः, वायुसदृशी सम्प्रेषणीयता, यमसदृशी दण्ड-क्षमता, सूर्यसदृशी ओजस्विता, अग्निसदृशी तेजस्विता, वरुण-सदृशी न्याय-क्षमता, चन्द्र-सदृशी प्रजावात्सल्योचिताह्लादकता, कुबेरसदृशी च धनाढ्यता स्यात्। इदं तु वयं जानीम एव यद् राजतन्त्रे वंशानुक्रमपरम्परया राज्ञः पुत्र एव राजा भवति। एवं सत्यपि राजसु केचन गुणाः, पात्रताश्चापेक्ष्यन्ते। एतद्विषये याज्ञवल्क्य आह -

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः**
**विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः।**
**अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्।।**[3]

**5. दण्ड-व्यवस्था -**

राजधर्मप्रतिपादनप्रसङ्गे स्मृतिकारैर्दण्डस्य यन्माहात्म्यं प्रतिपादितं, तत्प्रभावेणैव सर्वोऽपि राजनयो दण्डनीति-नाम्ना प्रसिद्धिमगात्। इदमुल्लेखनीयं यन्मनु-विष्णु-स्मृत्योः श्यामत्वेन लोहिताक्षत्वेन

---

2. मनु.7/3
3. मनु.7/4
4. याज्ञ. 1.309-310

च दण्डस्य भयोत्पादकत्वं दृश्यते। तद्यथा -

**यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः।**
**प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यति।।[1]**

वस्तुतः दुष्टान् दण्डयितुं प्रजाश्च पालयितुं दण्डस्य महती आवश्यकतात्राङ्गीकृता। "दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति" "सर्वो दण्डजितो लोको" इत्यादिभिरुक्तिभिः मनुना दण्डस्यापरिहार्यता घोषिता। राजधर्मस्य सम्यक्प्रकारेण पालने दण्डो महत्त्वाधायी वर्तते। तदभावे मात्स्य-न्याये प्रवृत्ते सबलाः दुर्बलानामुत्पीडनं कुर्युः। मनुमतानुसारेण किं मानवा अपितु देवदानवगन्धर्वा अपि दण्डवशेनैव-स्व-स्वभोगाय कल्पन्ते। अत्र स्मृतिकाराणामयं निर्देशः महत्त्वाधायी वर्तते यद्दण्डविधानप्रसङ्गे दण्डनीयस्य जनस्य देशकालयोग्यतां विचार्यैव दण्डः प्रवर्तनीयः। दण्डाभावे कीदृशी स्थितिः स्यादित्यस्मिन् विषये मनुराह -

**दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः।**
**सर्वलोकप्रकोपश्च भवेद्धर्मस्य विभ्रमात्।।[2]**

**6. मन्त्रिपरिषदादि-नियुक्तिः -**

राज्यसञ्चालनार्थं राजधर्मपालनार्थं मन्त्रिपरिषदो नियुक्तिविषये विविधस्मृतिषु पर्याप्तो विचारो दृश्यते। अत्र सप्त अष्टौ वा विविधगुणोपेता मन्त्रिणः स्युः। तथा हि -

**मौलाञ्च्छास्त्रविदः शूरान् लब्धलक्ष्यान् कुलोद्भवान्।**
**सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्।।[3]**

अस्यातिरिक्तं धर्मानुष्ठानार्थं पुरोहितस्य, सन्धिविग्रहाद्यर्थं दूतस्य,अन्येषां चाधिकारिणां योग्यतां वीक्ष्य राज्ञा नियुक्तिः करणीया। ग्रामप्रशासनार्थमपि ग्रामाधिपत्यादीनां नियुक्तेर्निर्देशाः स्मृति-ग्रन्थेषु प्राप्यन्ते।

**7. कर-ग्रहणम् -**

करग्रहणस्यापि व्यवस्था अत्यन्तमेव प्राचीना वर्तते। प्रजानां परिपालनार्थं ताभ्यो बलिर्गृह्यत इति प्रसिद्धो धर्मशास्त्रीयः सिद्धान्तः। राजा भूस्वामी भवति, अतस्तन्निवासित्वात् करदानं प्रजानां कर्तव्यम्। तथा हि -

---

1. विष्णु.3.95
2. मनु.7.24
3. मनु.7.54

**भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा**
**तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु।**
**भूतानां तन्निवासित्वात्स्वामित्वं तेन कीर्तितम्**
**तत्क्रिया बलिषड्भागं शुभाशुभनिमित्तजम्॥[1]**

अत्रेदमुल्लेखनीयं यद्विविधशास्त्रकारैर्ब्राह्मणेभ्यो विविधानि सौविध्यानि प्रदत्तानि। तथैव तेभ्य: करग्रहणस्यापि निषेध: कृत:। तस्य कारणं प्रतिपादयन् विष्णु-स्मृतिकार आह "ते हि राज्ञो धर्मकरा:"[2]

**8. दण्डनीत्यादिविविधविद्यानां परिज्ञानम् -**

प्रजानां परिपालनं परिरक्षणं राज्ञां परमो धर्म:। तस्मात् सम्यक्शासनसञ्चालनार्थं दण्डनीतिसहितानां विविधविद्यानां परिज्ञानं राज्ञ: कृते आवश्यकम्। तस्मादेव स्मृतिकारो निर्दिशति -

**त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।**
**आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकत:॥[3]**

आसां विद्यानामवबोधेन राजा न केवलं प्रजाकल्याणार्थं तद्विषयकनीतिनिर्माणं कर्तुं प्रभवति, अपितु आत्मविद्यादिपरिज्ञानेन आत्मकल्याणमपि कर्तुं पारयति।

**9. दण्डनीत्यनुसारेणाचरणम्**

समर्थो राजा तदैव राज्यसञ्चालनं कर्तुं शक्तो भवति, यदा दण्डनीत्यनुसारेणाचरेत्। अमात्यवर्गेण सह यथासमयं मन्त्रणा, सामाद्युपायै:, सन्धिविग्रहादिगुणैश्च आन्तरिक-बाह्यशत्रुषु नियन्त्रणं, गुप्तचराणां सम्यक्प्रयोगेण बाह्यान्तरिकव्यवस्थाया: परिज्ञानं, सर्वविधोपायैरात्मरक्षणं चेत्यादयो विविधा विषया दण्डनीतौ प्राधान्येन अन्तर्भूता:। मृगयादिकामजव्यसनानां, दण्डपारुष्यादिक्रोधजव्यसनानामपि दुरन्तानां यत्नेन परित्यागो विधेय:।

**दश कामसमुत्थानि तथाष्टौ क्रोधजानि च।**
**व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥[4]**

युद्धादिविविधासु दशासु तस्य कीदृशो व्यवहार: स्यादित्यस्मिन् विषये मनुनोक्तम् -

**बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्।**
**वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत्॥[5]**

1. कात्यायन16-17
2. विष्णु.3.27
3. मनु.7.43
4. मनु.7.45
5. मनु.7.106

अपि च, राज्ञः कृते स्मृतिकारैरेका विशिष्टा दिनचर्यापि निर्दिष्टा वर्तते। तदनुसारेण राज्ञा रात्रौ चतुर्थे यामे उत्थाय स्वकीयेषु राजकर्मसु सावधानतया प्रवृत्तेन भाव्यम्।

**10. कल्याणकारि-राज्यस्य स्थापना -**

इदं पूर्वमेव प्रतिपादितं यत् प्रजानां पितेव सम्यक्तया परिरक्षणं परिपालनं वा राज्ञः प्रथमं विद्यते कर्तव्यम्। "स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता।"[1] "सर्वदानाधिकं यस्मात्प्रजानां परिपालनम्।"[2] कश्चिदपि समाजस्तदैव विकसितः समृद्धो वा भवितुमर्हति, यदा तत्र दीनानां, दुर्बलानां विशिष्टा चिन्ता स्यात्। अस्मिन् विषये विष्णु-स्मृतिकार आह, "बालानाथस्त्रीधनानि राजा परिपालयेत्।''[3] "वृद्धसेवी भवेत्" अन्यत्र याज्ञवल्क्येनोक्तम्[4] -

**चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।**
**पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः।।[5]**

य उत्कोचं गृहीत्वा जनान् पीडयन्ति, व्यवस्थायां च भ्रष्टाचारमुत्पादयन्ति, तेषां कृतेऽपि द्रव्याहरणसहितं निर्वासनदण्डः स्मृतिकारेण कल्पितः। "उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्।"[6] तात्कालिकः समाजो वर्णाश्रमाधारेण प्रवर्तते स्म, तस्मादेव तादृशव्यवस्था-संरक्षणमपि राज्ञो महनीयो धर्म आसीत् तथा हि - "वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम्[7] इदमेव कारणं यद् जीवनस्य विविधेषु पक्षेषु ब्राह्मणानां कृते सुविधामूलकानि प्रावधानानि दृश्यन्ते। अपि च, प्रायशः राजा दानमानपूजाभिस्तेषां सत्काराय निर्दिष्टः।

**11. उपसंहारः -**

विविध-स्मृतीनां परिशीलनेन ज्ञायते यत् तत्र राजधर्मस्य विशिष्टं महत्त्वं वर्तते। आदर्शभूतस्य राज्ञः या परिकल्पना स्मृतिकारैः प्रदर्शिता, तत्परिपालनं राजभिः कियन्मात्रं क्रियते स्म इति तु वर्तते शोध-विषयः। यद्यपि वयं लोकतान्त्रिके नूतने परिवेशे जीवामस्तथापि धर्मशास्त्रकारैः प्रतिपादितानि अनेकानि प्रावधानानि विधानानि वा अद्यत्वेऽप्युपयुक्तानि वर्तन्ते। यद्यपि अनेके विषयाः साम्प्रतिके काले अप्रासङ्गिकाः स्युस्तथापि तन्माध्यमेन आधुनिकपरिवेशे दण्डनीति-विषयकस्य चिन्तनस्य मार्गदर्शनं तु भवितुमेवार्हति।

।। इति शम्।।

---

1. याज्ञ. १.३३४
2. याज्ञ. १.३३५
3. विष्णु.३.६५
4. विष्णु.३.७७
5. याज्ञ. १.३३६
6. याज्ञ. १.३३९
7. विष्णु ३.३

ISSN - 0974-8946
जुलाई-सितम्बर 2018

शोधप्रभा
वर्षः 43, तृतीयाङ्कः

# शारीरिकशिक्षायाः मनोवैज्ञानिकपक्षाः

डॉ. परमेशकुमारशर्मा*

मानवानां व्यवहारे प्रतिनित्यं वैज्ञानिकचाकचिक्यकारणेन परिवर्तनानि जायमानानि सन्ति। मानवाः बौद्धिकतायाः अपरपर्यायभूताः भवन्ति, अन्येषु केषुचिदपि प्राणिषु तथा बौद्धिकता न भवति यथा बौद्धिकता मानवेषु। मनोविज्ञानानुसारं मानवः विचारशीलप्राणी वर्तते । तस्य आन्तरिकशक्त्या सः नूतनविषयेषु विचारेषु वा सर्वदा लग्नो भवति। केषाञ्चन जनानां क्वचिद्भ्रमोऽपि जायते विचारक्रीडयोः कः सम्बन्धः इति। किन्तु प्रायः सिद्धमेव विविधानुसन्धानैः यत् क्रीडाशिक्षकैः मनोवैज्ञानिक-सिद्धान्तानामाधारेणैव निर्णयः क्रियते यत् कथं कस्मिन् च काले क्रीडनीयमिति। शारीरिकशिक्षकः तदा एव उत्तमशिक्षको [1]भवितुमर्हति यदा सः व्यवहारस्य विविधविधीन् तत्सम्बद्धविषयान् च जानाति इति। अत्र हि अयं विषयः अवगन्तव्यः यत् शरीरं विना मनसः, मनः विना शरीरस्य किमपि अस्तित्वं नास्ति इति। मनः व्यवस्थितं स्थिरं च तर्हि शरीरमपि व्यवस्थितं स्थिरं च कर्म सम्पादयति। अतः मस्तिष्कं शरीरं च स्वस्थे भवेताम्[2]। मस्तिष्केणैव मानवः चिन्तयति शरीरं च नियन्त्रयति। मनसः आज्ञया एव शरीरस्य विविधानि अङ्गानि कार्याणि कुर्वन्ति[3]।

मनोवैज्ञानिकाः यावन्तः अपि सामान्यत्वेन विषयाः वर्तन्ते ते शारीरिकशिक्षायै महत्त्वपूर्णम् अवधानं विदधति। क्रीडायां शारीरिकसौष्ठवं यावदपेक्षितं तावदेव मानसिकसौष्ठवमपि अपेक्षितं भवति तत्र हि बाहुल्येन व्यक्तित्वेन एव उत्तमस्य मानवस्य व्यवहारान्वितिः क्रियते। शारीरिकशिक्षायां मनोवैज्ञानिकयन्त्राणां महती आवश्यकता भवति यतः चिन्तनं विना कस्याः अपि उत्तमक्रीडायाः परिणमनं भवितुं नार्हति। मनोवैज्ञानिकपक्षैः कल्पनापि क्रीडायाः क्षेत्रे उत्कृष्टा भवति तथैव तर्कणा सामर्थ्यमपि निरन्तरं वर्धते। तद्वदेव अवधानम् अभिरुचिः, अभिक्षमता, सर्जनात्मकता, बुद्धिः, च एतानि सर्वाणि तत्त्वानि अपेक्षितानि एव।

---

* सहायकाचार्यः, शिक्षाशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् , नवदेहली-16

1. उच्चतर सामान्य मनोविज्ञान, सिंह, अरुण कुमार, मोतीलाल बनारसीदास, 2010 पृष्ठसंख्या-701
2. शिक्षा मनोविज्ञान, अरुण कुमार् सिंह, भारती भवन, पृष्ठ-513
3. स्वास्थ्यशिक्षा- जी. पी. शैरी- पृष्ठसंख्या-291

## खेलमनोविज्ञानम्

कस्यचिदपि क्रीडालो: खेलमनोविज्ञानस्य अपि ज्ञानं नितराम् अनिवार्य भवति। क्रीडा कदापि मनसि न धारणीया तासाम् उभयविधं जयपराजयात्मकं फलं तस्मिन् काले एव विस्मरणीयम्। खेलमनोविज्ञानस्य अभावे युद्धस्थिति:, क्रीडात्याग:, मनोमालिन्यं मानसिकहिंसा जीवने सुतरां कालुष्यं च जायते। अत: यावत् सुस्थिरतया क्रीडालु: खेलवृत्तिं नैवावगच्छति तावत्स: वास्तविकजीवनेन सह योजयति क्रीडामपि। तेन जीवने असमीचीना: परिणामा: जायन्ते। प्रत्येकं क्रीडालु: क्रीडाया: पूर्वम् एव अवगच्छेत् क्रीडाङ्गणे प्रविष्टद्वये गणे कश्चन एक: अवश्यं पराजितो भविष्यति एव। तत्र मम गणोऽपि कदाचित् भवितुमर्हेत्। किन्तु सकारात्मचिन्तनेनैव क्रीडाया: समारम्भ: केनापि विजयेच्छुना करणीय:। उभयदृष्टिं मनसि निधाय क्रीडालुना क्रीडाङ्गणं प्रवेष्टुव्यम्। यत: मनस: जयेनैव क्रीडाजय: इति कश्चित् प्रतिवाद:। साम्प्रतं य: जयं प्राप्नोति स: जयति य: पराजयते सोऽपि जयति इति भावेन क्रीडास्पर्धासु प्रत्येकं जनेन भाग: ग्रहीतव्य:[1]।

कस्यामपि क्रीडायां पूर्णानन्द: स्वीकर्तव्य: इति भवति तावन्महत्त्वपूर्णम्। क्रीडायां पूर्णमनोयोगेन आनन्दबुद्ध्या च भाग: स्वीकरणीय:। येन क्रीडाया: अनन्तरमपि कष्टं न जायेत। क्रीडायामपि नूतनप्रयोगाय नियमप्रतिबद्धतायामपि चिन्तनस्य अपेक्षा दरीदृश्यते। क्रीडालो: लक्ष्यं यद्यपि जयस्य भवेद् किन्तु कथमपि अहं एव जयं प्राप्नुयाम् इति भावो न स्यात् यत् अहं भाव: केवलं प्रक्रमं दूषयति तत्रैव द्वेष: म्लानता परस्परनिन्दनं च समुत्पद्यन्ते। अत: प्रत्येकं क्रीडालु: खेलमनोविज्ञानं स्वजयं मनसि निधाय जानीयादेव इति। तेनैव सर्वेषां मनोदशाया: अवगमनं जायते तद्यथा-

प्रतिस्पर्धाया: विकास:, उत्साहस्य विकास:, पूर्णमनोयोगेन साहाय्यम्, सकारात्मकव्यवहारस्य प्रयोग:, अभिप्रेरणाया: अभिवर्धनम्, सर्जनात्मकताया: विकास:, भावनाया: समादर:, उद्देश्यानां निर्धारणम्, विद्यार्थिनां रुचेरवगम:, क्रीडालूनां क्षमतावर्धनम्, स्वस्थप्रतिस्पर्धा, सामूहिकानां वाद:, क्रीडनप्रकार:,सामर्थ्येन क्रीडनम्। अनेन एवंविधसम्माननं स्वयमेव जायते इति। तत्रैव क्रीडायाम् उपलब्धि: अभिप्रेरणा च कथमुपकरोति इति विचार्यते।

## क्रीडायाम् उपलब्धि: अभिप्रेरणा च

प्रतिनित्यं जयपराजयेन छात्रा: क्रीडायां किञ्चिद् अविस्मरणीयम् अद्भुतम् अकल्पनीयं ज्ञानं प्राप्नुवन्ति। क्रीडायां पराजयेनापि शिक्षणं जायते, जयेनापि किमपि शिक्षणमेव जायते एवञ्च जयपराजयेन क्रीडाभ्यासेन नित्यक्रीडया वा कौशलविकासोऽपि भवति इत्यनुभवोऽपि क्रीडया आयाति एव यश्च अनुभव: द्वितीयक्रीडायां स्थानान्तरितो भवति येन पराजये सति जयस्य उत्कण्ठा जायते, जये सति इतोऽपि आन्यर्येण धर्येण च जय: प्राप्तव्य: इति भावस्समुत्पद्यते।

---

1. शारीरिकशिक्षा के सिद्धान्त एवम् इतिहास, रमेशचन्द्र कंवर अमित ब्रदर्स पब्लिकेशन्स, द्वितीयसंस्करण-2007

क्रीडायाम् उपलब्धिरित्यस्याभिप्रायोऽर्जितनिपुणतया बोधेन कौशलविकासेन[1] वा वर्तते। व्यक्तिगतयोग्यतानां सन्दर्भे उपलब्धीनां प्राप्तिः काचित् महत्त्वपूर्णा संवेगात्मिका आवश्यकता वर्तते। विद्यालये महाविद्यालये वा छात्रः अद्‌भुतां विद्वत्तां प्राप्य क्रीडाक्षेत्रे क्रीडित्वा अन्यकार्यकलापेषु भागं गृहीत्वा आवश्यकतां पूरयितुं शक्नोति। अग्रिमजीवने स्वव्यवसायं निष्ठया एकाग्रतया च कृत्वा उत्तमपरिवारं निर्माय समाजसेवाकार्येषु योगं स्वीकृत्य नूतनकलां साहित्यं सङ्गीतं च अधीत्य स्वावश्यकतां पूरयति। अद्वितीतेन कार्येण आत्मविश्वासोऽपि जायते। अन्येऽपि तं सम्मानयन्ति[2]। इयं सामाजिकमानसिकता व्यक्तीनाम् उपलब्धये अत्यन्तमेव भावपूर्णप्रेरकस्य कार्यं करोति।

परन्तु यदि व्यक्तिः वाञ्छितम् उपलब्धिं प्राप्तुं न शक्नोति तर्हि आधिक्येन तस्मिन् हीनता, निराशा अनात्मविश्वासः च समुत्पद्यते। अतः मातापित्रोः शिक्षकस्य च महत्त्वपूर्णं कर्तव्यं यत् सः उचितकार्याय एव स्वीयं छात्रं सम्प्रेरयेत् यतः तदा एव उचितविकासो छात्रस्य तस्य भवितुमर्हति इति। रुचीनां योग्यतानां च अनुसारेण अनुकूलक्षेत्रे उपलब्धये प्रोत्साहनीयाः। ते तत्सीम्नः परिचायनीयाः यत् सीम्नि स्थित्वा एव ते स्वीयं लक्ष्यं निधारयन्तु इति।

## क्रीडायाम् अभिप्रेरणा

मनोविज्ञानानुसारम् अभिप्रेरणा[3] न तादृशी योजना वस्तु वा यच्छिक्षकेणैव उत्पादयितुं शक्येत, सा तु काचित् आन्तरिकी अवस्था या उद्देश्यानि लक्ष्यं च प्रति सततं जायमाना भवति। अभिप्रेरणायै वस्तुत्रयम् अनिवार्यतया भवति तदा एव स्थायिरूपेण अभिप्रेरणा सर्वेषु जायते। तत्र हि प्रामुख्येण आवश्यकता, अन्तर्नोदः प्रोत्साहनं लक्ष्यं वा भवन्ति। अभिप्रेरणाया आवश्यकतानुगुणम् अन्तर्नोदसाहाय्येन लक्ष्यं प्रति जनः सर्वदा अभिप्रेरितो भवति, तत्र हि प्रोत्साहनस्य प्रकारद्वयमपि अभिप्रेरणायां सहायकं भवति प्रथमन्तावत् सकारात्मकप्रोत्साहनं द्वितीयन्तावत् नकारात्मकप्रोत्साहनं चास्ति[4]।

अभिप्रेरणं द्विधा भवति शारीरिकाभिप्रेरणम् अर्जिताभिप्रेरणञ्च। उभयविधमपि अभिप्रेरणं मानवं सामान्यत्वेन स्वीयकर्माणि उचिततया सम्पादयितुं प्रेरयति सम्प्रेषणस्यैव तादृशं सामर्थ्यं भवति यद्द्वारा सः सर्वदा नूतनानि कार्याणि करोति। शारीरिकाभिप्रेरणेन शरीरे सन्तुलनं सर्वदा स्थिरं भवति, यच्चाभिप्रेरणं सर्वेषु अपि मानवेषु समानरूपेण दृग्गोचरं भवति। अर्जिताभिप्रेरणं तादृशम् अभिप्रेरणं भवति यज्जन्मनः न भवति किन्तु व्यक्तिः जन्मनः परं तादृशम् अभिप्रेरणं शिक्ष्यते। एतादृशमभिप्रेरणं जीवनाय आवश्यकमेव इति न भवति। मनोवैज्ञानिकदृष्ट्या कानिचन अभिप्रेरणानि सन्ति यानि जीवनं महत्त्वभूतं कुर्वन्ति। यथा[5] हि-

---

1. शिक्षा मनोविज्ञान, अरुण कुमार् सिंह, भारती भवन, पृष्ठ 227
2. अर्वाचीनं मनोविज्ञानम्, श्रीमामराजदत्तकपितकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः पृष्ठसंख्या-342
3. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ-269
4. उच्चतर सामान्य मनोविज्ञान, सिंह, अरुण कुमार, मोतीलाल बनारसीदास, 2010, पृष्ठसंख्या-701
5. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ 278

१. आक्रमणशीलताया: अभिप्रेरणम्।

२. अनुमोदनाभिप्रेरणम्।

३. उपलब्धि-अभिप्रेरणम्।

४. संबन्धनाभिप्रेरणम्।

५. चिन्ताह्लासाभिप्रेरणम्।

६. सत्ताभिप्रेरणम्।

एतादृशानि अभिप्रेरणानि सततश्रमेण उत्तमलक्ष्यप्राप्तये मानवं सम्प्रेरयन्ति एतद्द्वारा मानवानां नितरां विकासो जायते ते शारीरिकरूपेण क्रीडायामुपस्थिता: जायन्ते यद्यपि एतत्-स्वभाविकं वर्तते किन्तु प्रेरणया जायते। आन्तरिकाभिप्रेरणं बाह्याभिप्रेरणं च आन्तरिकाभिप्रेरणं बालस्य कार्यं प्रति अभिरुचिं वर्धयति। स: स्वयमेव कार्यं कर्तुं रुचिं प्रकटयति तत्रैव आनन्दानुभवं करोति किन्तु बाह्याभिप्रेरणेन बालस्य प्रोत्साहनं निश्चितदिशि क्रियते येन स: स्वीयलक्ष्यं प्रति सक्रियो भूत्वा आन्दोतस्सन् प्रयत्नरतो भवति लक्ष्यं च साधयति। उत्तमोपलब्धयेऽपि अभिप्रेरणस्य महती आवश्यकता भवति।

बाह्याभिप्रेरणेन न्यूनसामर्थ्यं प्राप्तवन्त: अपि छात्रा: निरन्तरं प्रयत्नेन पुरस्कारबलेन उत्तमोपलब्धिं प्राप्तुं शक्नुवन्ति।

क्रीडायाम् अभिप्रेरणाया: कार्यम्-

१. अभिप्रेरणा व्यवहाराय निश्चितदिशां कलां च प्रदर्शयति।

२. अभिप्रेरणा व्यवहारेभ्य: शक्तिं प्रददाति।

३. अभिप्रेरणया व्यवहार: चलनात्मको जायते।

क्रीडायाम् अभिप्रेरणाया: महत्त्वपूर्णं स्थानं भवति, सा एव अभिप्रेरणा सुतरां स्वीयां कार्यप्रणालीं संसाधयति, आन्तरिकशक्त्या छात्राणां सर्वविधं सामर्थ्यं पूरयति।

**क्रीडायां रुचि:**

पूर्वस्मिन् कालेऽयं शब्द: ध्यानं जिज्ञासा इच्छा चेत्यादीनां शब्दानां समानान्तरशब्देन अङ्गीक्रियते स्म[1]। 1940 तमे वर्षे मनोवैज्ञानिकै: अस्य कश्चन विशेषोऽर्थ: स्वीकर्त्तव्य: इति चिन्तितम्।[2] बाहुल्येन रुचिशब्दस्यार्थ: कार्यात्मकार्थे संरचनात्मकार्थे चार्थद्वये स्वीकरणं समारब्धम्। कार्यात्मकपक्षे

1. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ 506
2. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ 513

अर्थे वा अन्येषां कार्याणां तुलनायां कस्मिंश्चित् एकस्मिन् कार्ये विशेषाकर्षणं रुचिरिति रूपेण समारब्धम्। तत्रैव संरचनात्मकार्थे व्यक्तित्वस्य अर्जित-जन्मजाततत्त्वेन स्वीक्रियते येन वस्तु प्रति सार्थकानुभूतिरुत्पद्यते। उभयार्थेऽपि समान्यरूपेण व्यक्तिः वस्तूनां क्रियाणां वा चयनं कृत्वा आकर्षण-अपकर्षणकोट्यां स्थापयति। रुचिरेव बालेषु प्रेरणात्मकबलरूपेणापि कार्य विदधाति। रुचेः सम्बन्धः साक्षाद्ध्यानेन वर्तते। रुचेः अनेके प्रकाराः वर्तन्ते यया अभिप्रेरितो भवति मानवः तत्रादौ-

1. व्यक्तरुचिः – स्पष्टतया बालः तुलनात्मकरूपेण आकर्षणात्मकविषयमुपस्थापयति।
2. प्रकटरुचिः – बालः अतिरिक्तकाले यत्कर्तुं प्रायः ईहते।
3. आविष्कारिरुचिः – ज्ञानं मानकाभिरुचि- आविष्कारिकात्मकक्रियात्वेन जायते। प्रायः 62 मानकरुचि-आविष्कारिकाः सन्ति।
4. परीक्षितरुचिः – अङ्कान् दृष्ट्वा निर्णीयतेऽन्यविषयाणामपेक्षया गणितविषये संस्कृते वा अस्याधिका रुचिर्वर्तते।

**रुचेः क्रीडायां प्रभावकारकाणि अपि[1] सन्ति -**

1. प्रारम्भिकविद्यालयानुभूतम्।
2. मातापित्रोः प्रभावः।
3. कार्य प्रति समर्पणम्।
4. विद्यालयस्य आन्तरिकसंवेदिकवातावरणम्।
5. गुरु-छात्रसम्बन्धः।
6. सहाध्यायिभिः सम्बन्धः।
7. क्रीडासाफल्यम्।
8. कौटुम्बिकवातावरणम्।

एतानि कारणानि क्रीडायां बालस्य रुचिं प्रभावयन्ति रुचिप्रभावेण प्रभावितस्सन् जनः उचितानुचितनिर्णयं स्वीकरोति एतैः कारणैरेव क्रीडायाम् अन्यक्रियासु वा बालकानां रुचिः समुत्पद्यते। सर्वेषामपि एतेषाम् प्रेरणं क्रीडां प्रति वर्तते तर्हि रुच्या प्रवृत्तो मानवः साफल्यम् अधिगमिष्यति इति।

**क्रीडायां रुचेर्महत्त्वम्**

छात्रः क्रीडायां रुचिं प्रदर्शयति चेत् तेषां कृते क्रीडायाः महत्त्वमधिकाधिकं जायेत किञ्चित् विशिष्टम् अनतिसाधारणं कार्य प्रति समर्पणमुत्साहो वा उत्पद्यते। रुचेः कारणेन क्रीडां प्रति मनोवृत्तिरपि भवति तया एव उत्कृष्टा भावना भवति। तेन क्रीडापरिणामं प्रति अधिकप्रेरितस्सन् क्रीडारणाह्वानं बालं स्वीकरोति जयं च पौनः पुन्येन प्राप्नोति एव। रुचेरभावे क्रीडापि निष्क्रिया एव भवति। रुचिरेव[2] क्रीडां आनन्दकरीं प्रेरणायुक्ततां करोति – रुचिकारणेनैव अतितरां प्रशंसनीयाः

1. शिक्षायाः मनोवैज्ञानिकाधाराः, डॉ. बि.पद्ममित्रश्रीनिवासः, जगदीशप्रकासनम्, जयपुरम्, 2012, पृष्ठसंख्या-163
2. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ-521

परिणामा: अपि जायन्ते[1]।

* क्रीडोद्देश्यनानि स्पष्टतया अवगच्छति।
* भयं संशय: च नष्टौ भवत:।
* प्रत्येकं क्रियां योजयित्वा नूतनानुभवं प्राप्नोति।
* क्रियाकलापेषु विशिष्टा रुचिर्जायते।
* क्रियया छात्राणां रुचि: शैक्षिककार्यक्रमेषु अपि जायते।
* रुच्या विशिष्टकौशलानां विकासो जायते।

**रुच्या प्रतिद्वन्दी अधिक: जागरूको भवति।**

रुच्या कार्यकरणेन अवश्यं मानवमात्रस्य विकासमार्ग: प्रशस्तो भवति तद्बलेनैव मानव: सर्वबिधसौविध्यमपि प्राप्नोति। अत: रुचे: महती आवश्यकता प्रतीयते इति।

**क्रीडायाम् अभिवृत्ति:**

अभिवृत्ति:[2] नाम व्यक्तिं, वस्तु, घटनां च प्रति अनुक्रियाया: मानसिकतत्परता वर्तते। अभिवृत्तौ अनुकुलताप्रतिकूलताकारणेन व्यक्तिं वस्तु घटनां च प्रति अनुक्रियायै तत्परता प्राप्यते। क्रीडायां यस्य छात्रस्यानुवृत्ति:, स: तां प्रति सर्वदा अनुकुलव्यवहारं करिष्यति। यत् वस्तु स: न इच्छति तत् प्रति स्वीयमनोभावं प्रकटयिष्यति।

अभिवृत्तौ त्रय: विषया: बहुल्येन भवन्ति।

1. संज्ञानात्मकघटकम् - अभिवृत्तिं प्रति ज्ञानं विश्वासश्च स्वीक्रियेते।
2. व्यवहारात्मकघटकम् - अभिवृत्तिं प्रति प्रतिभानुकूलव्यवहारतत्परता भवति।
3. भावात्मकघटकम् - मनसि अभिवृत्तिं प्रति सुखद-दु:खदभावा: भवन्ति।

अभिवृत्ति: बाहुल्येन अर्जिता भवति क्रीडाक्षेत्रे सा शिक्षणं सुतरां प्रभावयति। अभिवृत्ते: निर्माणानन्तरं पुन: परिवर्तनम् अत्यन्तं कष्टकरं भवति। अभिवृत्ति: आवश्यकतया भावेन आत्मसम्प्रत्ययेन च सम्बद्धा वर्तते। अभिवृत्तौ परिवर्तनेन त्रिषु परिवर्तनं जायते। क्रीडाक्षेत्रे शिक्षणस्य अत्यन्तं महत्त्वपूर्ण दायित्वं, स: छात्राणाम् अभिवृत्तौ उत्तमपरिवर्तनं कुर्यात्। यदि क्रीडाशिक्षकाय सर्वविधं प्रेरणात्मकं परिज्ञानं भवति तर्हि स: छात्राणाम् अभिवृत्तौ उचितपरिवर्तनं यथासमयं कर्तुं प्रभवति।

अभिवृत्तिपरिवर्तनाय शिक्षकस्य दायित्वम्-

1. शिक्षका: छात्राणां सर्वविधाभिवृत्तिम् अवगच्छेयु:।
2. क्रीडाशिक्षकस्य पारिवारिकसम्बन्ध: कौटुम्बिकै: जनै: सह स्यात्।

---

1. स्वास्थ्यशिक्षा- जी.पी.शैरी- पृष्ठसंख्या-295
2. शिक्षा मनोविज्ञान, अरुण कुमार सिंह, भारती भवन, पृष्ठ-521

3. सहजतया शिक्षकाः अभिवृत्तौ परिवर्तनम् आनयेयुः।

4. परामर्शेन शिक्षकाः अनुकूलदिशि अभिवृत्तिं कर्तुं शक्नुवन्ति।

5. शिक्षकाः रुच्या भावात्मकघटकानि साक्षात्परिवर्तयितुं प्रयतेत[1]।

6. शिक्षकाः घृणा-अविश्वासाभिवृत्तिं समापयेयुः।

7. शिक्षकाः सामूहिकक्रियाणां समावेशं सततं कुर्युः।

निष्कर्षरूपेण वक्तुं शक्यते यत् जीवने मनोवैज्ञानिकपक्षाः सुतरां महत्त्वभूतां भूमिकां निर्वहन्ति, तैः क्रीडाक्षेत्रे परिवर्तनं सर्वदा जायते जनाः परिष्काराय च सततं प्रयतन्ते तेषां जीवने कथं क्रीडानन्दानुभूतये समाजस्य मनोरञ्जनाय कथमुपकुर्यादिति चिन्त्यम् अस्ति। क्रीडाक्षेत्रस्य किञ्चित् महत्त्वम् अस्ति तच्च अनेन आधिक्येन समाजे वर्धयितुं शक्यते।

**सन्दर्भग्रन्थाः**

१. उच्चतर सामान्य मनोविज्ञान, सिंह . अरुण कुमार, मोतीलाल बनारसीदास, २०१०
२. शिक्षा मनोविज्ञान, अरुण कुमार् सिंह, भारती भवन,
३. अर्वाचीनं मनोविज्ञानम्, श्रीमामराजदत्तकपिकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, पृष्ठसंख्या-३४२
४. स्वास्थ्यशिक्षा- जी. पी. शैरी- पृष्ठसंख्या-२९१
५. शारीरिकशिक्षा के सिद्धान्त एवम् इतिहास, रमेशचन्द्र कंवर अमित ब्रदर्स पब्लिकेशन्स, द्वीतीयसंस्करण-२००५
६. शिक्षायाः मनोवैज्ञानिकाधाराः, डा. बि. पद्ममित्रश्रीनिवासः,जगदीशप्रकासनम्, जपपुरम्,२०१२, पृष्ठसंख्या-१६३
७. मनोविज्ञानस्य सम्प्रदायः, अरुणकुमारसिंहः,मोतीलाल बनारसी दासः, संस्करणम्-१००४

1. मनोविज्ञानस्य सम्प्रदाय, अरुणकुमारसिंहः, मोतीलाल बनारसी दासः, संस्करणम्-2004, पृष्ठसंख्या-501

ISSN - 0974-8946
जुलाई-सितम्बर 2018

शोधप्रभा
वर्षः 43, तृतीयाङ्कः

# माधवीयधातुवृत्तावितरधातुवृत्तिविरोधः

**श्रीमुकुलदेवः***

मायणपुत्रसायणप्रणीतायां माधवीयायां धातुवृत्तावाख्यातविषयः समग्रतयाविव्रियत। धातुवृत्तिस्थयमङ्गलपद्येष्वस्याः माहात्म्यमित्थमुज्जगार सायणाचार्यः-

**सुधा तु वृत्तिर्विहिता बुधानां श्रीवत्सचिह्नेन कृते हि नाके।**
**सुधातुवृत्तिर्विहिता बुधानां श्रीकुण्डिनार्येण कलावपीह॥[1]**

अयं भावः- यथा हि नाके श्रीमद्भगवत्पादविष्णुर्देवान्नमृतमय्या वृत्त्या समयुङ्क्त तथैवाऽस्मिन् कलौ युगे सायणाचार्यः समेषां विदुषाङ्कृते सुधासमोपकर्त्रीमिमां वृत्तिं प्राणेष्ट। एतेनेदं सुस्पष्टम्-धातुवृत्तेरध्येता नूनमेवानया वृत्त्या धातुकान्तारावगाहनस्य महान्तमवसरमालालम्भीति। यावतो अन्यास्तु वृत्तयः सम्पूर्णतया सङ्क्षेपज्वरेण मोमूर्च्छिता इव।[2] तास्तु यत्र-तत्र केवलं मूलधातुसूत्राणि निर्दिशन्त्य एवाग्रे सरन्ति, अपेक्षितं धात्वर्थमप्युपेक्षन्ते। तद्यथा- सिद्धान्तकौमुद्याः धातु सं. 1600 ता. 1619 तमां संख्यां यावत् तिङन्तप्रकरणम्। धातुप्रदीपस्य सङ्क्षिप्तता तु सुव्यक्तैव। परमाचार्यसायणः स्वस्यां वृत्तौ क्वापि नेत्थमाचचार। स हि प्रत्येकं धातुमादाय गभीरञ्चानुचिन्तयन् महाभाष्यं, काशिकावृत्तिं, तद्व्याख्यानभूतं न्यासं, पदमञ्जरीं, स्वतः पूर्वतनीनाः क्षीर-मैत्रेयवृत्तींश्चोदाहरन्नत्यावश्यक-वार्तिक-परिभाषाज्ञापकैश्च स्वां धातुवृत्तिं समग्रतया व्यातेने।[3] अस्यां खलु वृत्तौ बहुत्र धातुसूत्रव्याख्यानव्याजेन पातञ्जलमहाभाष्यसिद्धान्तानां हार्दमतिहृद्यमवेव्रीयत, यच्चावश्यं विलोकनीयम्। सायणानुसारिणो दीक्षितादयस्तु साक्षान्महाभाष्यमनुद्धृत्य केवलं कैयट-प्रदीपमेवोद्धृत्य तोषमापुः। अस्तु, तथापि माधवीयधातुवृत्तेर्भाषा बहुषु स्थलेषु क्लिष्टा, कुत्रचिच्च दुर्भरेव समजनि। यत्र-तत्र गौरवग्रस्तताप्यस्याः क्लिश्नाति पाठकवृन्दम्। अस्या बहूनि मान्यमतानि पश्चाद्वर्तिकोविदैर्न्यक्कृतानि। तेनेयं वृत्तिर्बहुत्रान्यवृत्तिविरुद्धाप्यस्ति। इमं विरोधं वयमिह स्थालीपुलाकतया किञ्चित् प्रस्तुमः-

1. मूलधातुपाठगतविरोधः
2. धात्वर्थदृष्ट्या विरोधः

---

* शोधच्छात्रः, वेद-विभागः, श्री ला.ब.शा.रा.स.विद्यापीठम्, नव देहली-16

1. माधवीयाधातुवृत्तिस्थमङ्गलपद्यम्- 17
2. द्र.-मैत्रेयरक्षितप्रणीतः 'धातुप्रदीपः'
3. द्र.- माधवीयाधातुवृत्तिः मङ्गलपद्यम्-13-14

3. रूपगतविरोधः

4. सैद्धान्तिक-विरोधः

अधुनोपलब्धासु सर्वासु वृत्तिषु प्रायशस्तत्तत्कर्त्तारस्स्व-स्वशुचिरुच्यनुगुणं धातूनां मूलपाठमुररीचक्रुः। नैकोऽपि वृत्तिकृत्कोविदः पूर्वेषां वृत्तिकृतां धातुपाठं स्ववृत्तिवर्त्मनोऽधिकरणमवलम्बं पाथेयं वा मेने। क्षीरस्वामि-मैत्रेयरक्षित-भट्टोजिदीक्षितस्वामिदयानन्द-सरस्वतीप्रभृतयो वृत्तिप्रणेतारो धातुसंख्यां धातुपाठञ्चान्योऽन्यतोऽन्यदेवाशिश्रियुः। एतेषामिदमाचरणं नैवाभूतपूर्वमभिनवञ्च। यतो हीयं दशा क्षीरस्वामिपूर्वमप्यवर्तिष्ट। अत एवासाविदमुत्कमालिलेख-

**व्याख्यातेयं नवगणी कुशकाशावलम्बनात्,**
**चुरादिरधुनारब्धो यत्र भग्ना महारथाः।**
**पाठेऽर्थे चागमभ्रन्शान् महतामपि मोहतः,**
**न विद्मः, किन्तु जहिमः, किं वात्रादध्महे वयम्।।**[1]

क्षीरस्वामिनो हार्दवेदनाभरितेनैतेन पद्येनैतत् सुव्यक्तं यन्मूल-धातूनां पाठविषये सर्वेषु वृत्तिकृत्सु गभीरो विसम्वादः। सर्वोऽन्येषां पाठमप्रामाणिकमात्मीयञ्च परमं प्रामाणिकं मम्मनीति। परिणामतः सर्वासु वृत्तिषु धातूनां संख्या विभिन्नैवाजनि, पाठक्रमश्चापि नितरां पर्यवर्त्तत। अत्र खलु महामहोपाध्यायः पण्डितश्श्री युधिष्ठिरो मीमांसकः समुचितमवोचत्- सम्प्रत्युपलभ्यमानोऽयं धातुपाठः सायणाचार्यप्रतिसंस्कृतः। स एवेह पूर्णतया स्वैरमैर्त, स्वेच्छयैव चासावात्मानुगुणं धातूनां पाठमपि पर्यवृतत्। तदेवं परिवर्त्तनस्य चरम-सीम्न्यधिष्ठितायाः सायणस्यास्याः वृत्तेरितरवृत्तिभ्यो विरोधो न खलु विस्मयावहः। वयमिह माधीयधातुवृत्तेरन्तःसाक्ष्येणेममधः प्रदर्शयामः।

(क) सायणाचार्यः 2/71 तमं धातुसूत्रं 'मृजू-शुद्धौ'[2] इत्येवं पपाठ। पं. भट्टोजिदीक्षितः स्वसिद्धान्तकौमुद्यां 'मृजूष्-शुद्धौ' इतिषकारान्तमपठीत्।[3] क्षीरस्वाम्यपि स्वतरङ्गिण्याम् अस्य धातोः 'मृजूष्-शुद्धौ' इत्येव पाठं मान्यममंस्त।[4] पदमञ्जरीकृद्धरदत्तो न्यासकृज्जिनेन्द्रबुद्धिराख्यातिकाख्या-तृदयानन्दस्स्वामीममेव पाठमस्य धातोर्न्यगादिषुः समुचितम्।[5] आचार्यसायणस्त्वत्र द्विधा विप्रत्यपाद्यत, तद्यथा- ''अस्यानुदात्तत्वमनार्षम्। उक्तं च 'सृजिमृजी विद्ध्यनिट्स्वरान्'[6] इति करिकायां वृत्तौ मृजेरूदित्वादिटो विकल्पेन भाव्यम्। आगमश्च न दृश्यते। तदिहास्य पाठे प्रयोजनं चिन्त्यम्।''

---

1. द्र.-क्षीरतरङ्गिणी-चुरादिगणस्थमाद्यं पद्यम्
2. द्र.- माधवीयाधातुवृत्तिः 2/71
3. द्र.- सिद्धान्तकौमुदी-धा.सू. 2066
4. द्र.- क्षीरतरङ्गिणी 2/61
5. द्र.- पदमञ्जरीन्यासः, आख्यातिकः- तत्रैव
6. द्र.- काशिकावृत्तिः 7/2/10

आचार्यसायणस्यास्य कथनस्यायमाशयः 1. अस्य धातोः प्रकृतस्थले पाठः प्रमादजन्यः। 2. धातुरयमूदिन्नैव कथञ्चित्षिदिति। यतो हि- अन्यत्र षित्करणस्य प्रयोजनं 'षिद्भिदादिभ्योऽङ्'[1] इति सूत्रेण 'अङ्' प्रत्ययः। अयं धातुर्भिदादिगणे पठितः, अतोऽषित्त्वेऽपि भिदादित्त्वादस्मै 'अङ्' प्रत्ययो लभ्य एव अस्मान्नास्त्यत्र षित्करणस्य किमपि प्रयोजनम्। अत एवायमूदिदेवाङ्गी करणीयः। प्रकृते नीरक्षीरतयेक्षणेन सायणेनोपात्त पक्ष एव बलवानिति प्रतीमः। भट्टोजिदीक्षितस्य वैयाकरणसिद्धान्तकौमुदीति प्रसिद्ध ग्रन्थस्य 'बालमनोरमा' नाम प्रख्यातटीकायाः प्रणेता श्रीवासुदेवो धातुसं. 1066 इत्यस्य व्याख्यायां भट्टोजिदीक्षितोक्तोक्तषित्करणन्निरस्यन्नलिखत्- अत्र भिदादिगणे 'मृजा' शब्दस्य पठितत्वादेवाङ् प्रत्ययो लभ्यः, तस्मादत्र षित्करणं निष्प्रयोजनम्। स अवोचत् 'षित्करणमनार्षम् इत्याहुः'। 'व्याकरणचन्द्रोदयस्य' यशस्वी प्रणेता पं. चरुदेवोऽपि 'मृजू-शुद्धौ' इत्येवमिममूदिदेवामन्यत। तदेवमुक्त-धातुपाठस्य विषये मतभेदः सुव्यक्त एव। पुनरप्यत्र सायणीयपक्ष एव बलवत्तमः।

(ख) भ्वादिगणस्थं 38 तमं सूत्रमाचार्यसायणः 'कुथि-पुथि-लुथि-मथि-मान्थ -हिंसासंक्लेशनयोः'[2] इत्येवमपठत्। तदीयेनैतेन पाठेनेदं स्पष्टम्- कुथिप्रभृतिपञ्चधातूनां ग्रहणमेवात्र तस्मा अरोचिष्ट। क्षीरस्वामी तु स्वतरङ्गिणीनामवृत्तौ मान्थरहितोक्तधातुचतुष्टयमेव सन्न्यविक्षत।[3] दीक्षितोऽपीत्थमेव धातुचतुष्टयमत्रामनुतरक्षितोऽपि तथैवेति। क्षीरस्वामिनोऽत्रेदं वैशिष्ट्यं यदसौ चतुर्थं धातुमकारान्तनोपधं 'मन्थ' इत्येवमपठीत्। 'मान्थ' विषयेऽयमिमां वाचमुवाच- ''मथि-माथीत्यपि दौर्गाः, इति''।[4]

तदेवं वयमिह समेषां वृत्तिकृतां मतान्यालोडयन्त इमां निष्कृष्टिमुपागच्छामः, सायणमतिरिच्य नैकोऽपि वृत्तिकारोऽत्र मान्थपाठमङ्गीचकार। केवलं पुरुषकारवृत्तिः, निरुक्तस्य दुर्गवृत्तिश्च सायणमतमन्वमोमुत्ताम्। सायणोऽपि 'मान्थतिस्तु सर्वत्र मन्थतिवत्' इति विलिख्य नास्य धातेरितराणि रूपाण्यददर्शत। अत्रेदध्येयम्- नह्यत्राचार्यसायणः किमप्येतादृशं प्रमाणं प्रतुष्टाव येन मान्थधातोः सत्ता मान्यतामीयात्। यावतोऽसावन्यत्र बहुत्र स्वपक्षं बहुभिः प्रमाणैः प्रबलं पुपोष। मन्यामहे विपुले वैदिकवाङ्मये क्वाप्यसावस्य रूपाण्यलभत, परं लौकिकेऽखिलसाहित्येऽस्य प्रयोगो विरल एवेति।

(ग) आचार्यसायणो दिवादिगणस्य 19 तमस्य 'षह-षुह-शक्यर्थे' इति सूत्रस्य पाठं 'षुह-चक्यर्थे'[5] इत्येतदेवामन्यत। नासावत्र 'षह' धातुं सममीमिलत्। प्रकृते तेनालिख्यत- ''चक्यर्थस्तृप्तिः' इति स्वामिधनपालशाकटायनाः। आत्रेय-मैत्रेय-दुर्गाः 'षह-षुह' इति द्वौ धातू पेठुः।[6] सहेरिह पाठो

1. अष्टाध्यायीसूत्रपाठः 3/3/104
2. द्र.-माधवीयाधातुवृत्तिः 1/38
3. द्र.- क्षीरतरङ्गिणी 1/37
4. द्र.-तत्रैव
5. द्र.- माधवीयाधातुवृत्तिः 4/19
6. द्र.-तत्रैव

न्यासकारहरदत्तरामदेवादीनामप्यनभिमतः, यत् तत्र-तत्र सहिग्रहणे भौवादिकमेवाहुः, नामुम्। न चास्याग्रहणे कारणम्। 'दाश्वान्साह्वान्'[1] इत्यत्र 'साह्वान्' इति 'षह-मर्षणे' इत्यस्मात् परस्मैपदं निपात्यते'' इति वृत्तिमुपादाय ''षह-मर्षणे' इत्यात्मनेपदित्वात् चौरादिकस्य तु 'आधृषाद्वा'[2] इति णिजभावपक्षे दीर्घत्वमद्वित्वमनिट्त्वं च निपात्यत इत्यन्ये'' इति वदता हरदत्तेनेह सहेरपाठः स्फोरितः।[3] 'साह्वान्' इति निपातनम् आधृषीयाद् विभाषितणिचः' इति वदन् कैयटकारोऽप्यत्रैवानुकूलः। सहिं पठतां 'सह्यति' इत्याद्युदाहार्यम्। षत्वादिसहतिवन्नेयम्। अत्र 'परिषह्यति' इत्याद्युदाहृत्य 'परिनिविभ्यः'[4] इति षत्वमिति वदता आत्रेयेण यदुक्तम्- ''यत्तु तत्र 'षह-मर्षणै इत्यस्य ग्रहणं न्यासे प्रतपादितं नैतस्यापि'' इति तदनागममिति- नादरणीयम्'', अस्यैव धातोरभावान् न तस्यायं दोषः। स्वव्याघातकं चात्रेयवचनं, यद् वक्ष्यति- ''तीषसह. (अष्टा. 7/2/87) इतीड्विकल्पः सहेति' शबतन्तस्य सूत्रे निर्देशान्नास्येति।'' तच्च यस्यात् षत्वविधावपि तुल्यम्।''[5] अयं भावः - आत्रेयोऽत्र 'परिषह्यति' इत्युदाहृत्य 'परिनिविभ्यः' (अष्टा. 8/3/70) इति सूत्रेण यत् षत्वादेशं पत्यपपदत न्यासकृच्च 'षह-मर्षणे' इति धातुमग्रहीष्ट, तदुभयमपि दोषदूषितम्, यतो हि- आत्रेयवचनं वदतो व्याघातदोषपूर्णम्। स हि स्वयमेवाग्रेऽलिखत्- 'तीषसह.' (अष्टा. 7/2/48) इति शास्त्रेण विहित इड्विकल्पः 'सह' इति शबन्तनिर्देशाद् भौवादिके षह्धातौ भवति, न तु दैवादिकधातौ। अपि चानेनेदमपि ध्वन्यते यत् षत्वविधौ, इड्विकल्पविधौ चौभयत्राप्येकस्यैव षहधातोर्ग्रहणं भवेत्। अत एवाचार्य सायणः षुहधातुमात्रमत्रापठन् न तु षहधातुमपि। यावतो भट्टोजिदीक्षितोऽत्र 'षह-पुह' इति द्वयोरेव पाठं स्वीचकार 'चक्यर्थे' इत्यमुमर्थञ्च निर्दिदेश। क्षीरस्तु 'षुह' इति पाठं मन्यमानश्चक्यर्थे' इत्यर्थं शक्यर्थे' इत्येव परिवृते, शक्यर्थस्तृप्तिरित्यपि च प्रतुष्टाव। मैत्रेयरक्षितस्त्वत्रोभयधातुपाठं न्याय्यम्मेने क्षीरस्वामिनञ्चानुचकार। परं तन्नोचितम्, यतो हि पाणिनिर्धातुपाठे 'चक-तृप्तौ-प्रतिघाते चे'[6]त्येवं पपाठ, न पुनः 'शक-तृप्तौ' इति। अतोऽत्र 'चक्यर्थे' इति धात्वर्थ एव समुचितः।

(घ) 'ष्णुसु-अदने' (धा.सू. 4/5) इत्यस्य वृत्तौ विशेषेणेदमुल्लेखनीयं यत् सायणाचार्यः 'आदान इत्येके, अदर्शन इत्यपरे' इत्यादिकं विलिख्य परेषामाचार्याणां मतानि प्रददर्श, परं स्वमभिमतं किमपि नादीदृशत्।[7] अत्रास्य धातोः पाठस्तस्मै न रोचत इत्येवाभाति। क्षीरस्वामी दिवादिगणे चतुर्थधातुसूत्रे धातुमिमं 'ष्णसु-निरसने' इत्येवमपठत्। अत्रेदं सुस्पष्टं यदस्मिन् पाठे धातुरयमदुपधो नैवोदुपधः। अत्रैवासौ 'ष्णस-अदर्शने' इति द्रमिडाः' इति विलिख्य मतवैभिन्न्यमपि प्रादर्शयत्। मैत्रेयरक्षितः 'ष्णुसु-अदने' (धा.सू. 4/5) इत्यस्यानन्तरं 'ष्णुस-निरसन इत्येके मिच्च' इत्युक्त्वास्य रूपाण्युदाजहार।

1. अष्टाध्यायीसूत्रपाठः 6/1/12
2. माधवीयाधातुवृत्तिः 10/200
3. द्र.- पदमञ्जरी 6/1/12
4. अष्टाध्यायीसूत्रपाठः 8/3/70
5. द्र.- माधवीयाधातुवृत्तिः 4/19
6. धातुपाठः 1/76
7. द्र.- माधवीयाधातुवृत्तिः 4/5

पं. भट्टोजिदीक्षितो महर्षि-दयानन्दश्चोभौ प्रकृतेऽदुपधमुदुपधञ्चोभयविधं पाठं स्वीचक्रतु:। इत्थमत्र सायणाचार्यवृत्तितस्तेषां विरोधस्तु सुप्रकाशित एवेति।

(ङ) 'स्मृ-चिन्तायाम्'[1] इत्यस्य वृत्तौ सायणोऽलिखत्- ''अयमनेकार्थत्वाद् विस्मरणे चित्तादपक्रमणे च वर्तते। अनन्तरं द्वृ-वरे' इति क्वचित्पठ्यते।''[2] अत्र हि सायण: क्वचिच्छब्देन क्षीरस्वामि- (क्षीरतर. 1/666) मैत्रयरक्षितौ (धा.प्र. 1/630) चेङ्गयति। एतदनन्तरं 'द्वरति' इत्यादि ह्वरतिवत्। द्वर्यते संह्वियते इति द्वारम् इति विलिलेख। एतेनेदमति प्राकाश्यमेति सायणाचार्य: क्वचित्कपाठत्वेन द्वृधातो: पाठं स्वीचक्रे नैवात्मनोऽभिमतत्वेनेति। अनेनैव हेतुनासौ 'द्वृ' धातुं स्वकीये धातुपाठे नैव संन्यविक्षत्। पं. भट्टोजिदीक्षितोऽत्र मूलधातुपाठे 'ह्वृ-संवरणे' इति धातुसूत्रमपठीत्। एतेनेदं सुव्यक्तम्- अत्र मूलधातुपाठदृशा माधवीयधातुवृत्तेर्वैयाकरणसिद्धान्तकौमुद्यामुपात्तपाठेन सह विरोध:। क्षीरस्वामिना स्वीकृतेन 'द्वृ-वरे' इत्युपर्युक्तेन पाठेन, मैत्रेयरक्षितप्रोक्तेन 'दवृ-अनादरे' 'धातुप्रदीप (1660) इति पाठेन चास्माकं कथनं दार्ढ्यमुपैति। प्रकृते स्वामिदयानन्द सरस्वती स्वीकायाख्यातिकाभिधे ग्रन्थे 'वृ-सम्वरणे' इति पाठं स्वीकरोति, अस्यार्थमप्यसावाच्छादनमित्यवबोधयति। स हि 'उणादिकोशस्य'[3] वृत्तौ 'द्वारयति सम्वृणोति यथा सा द्वा: द्वारौ' इति व्युत्पत्तिं प्रदर्शयन् 'द्वृ-धातुं' सङ्केतयति, परमसावपि मूलधातुत्वेनैनमात्मनीने विख्याते ग्रन्थे ह्याख्यातिके नैव सन्निवेशयते। निर्वचनविदां वरेण्य आचार्ययास्क: स्वीये निरुक्ते (7/9) 'द्वारो जपतेर्वा द्रवतेर्वा वारयतेर्वा' इत्येवं द्वारशब्दं निर्वक्ति। एतेनावगम्यतेऽसावपि 'द्वृधातुं' नैव स्वीचकार। तदेवमत्र मूलधातुपाठ-विषये विविधवृत्तिकृतां माधवीयधातुवृत्तितो विसम्वाद: स्फुट एवेति दिक्।

---

1. द्र.-तत्रैव 1/655
2. द्र.- माधवीयाधातुवृत्ति: 1/655
3. द्र.- उणादिकोश: 2/57 (स्वा. दयानन्दवृत्ति:)

ISSN - 0974-8946
जुलाई-सितम्बर 2018

शोधप्रभा
वर्ष: 43, तृतीयाङ्क:

# पिण्डानयनपूर्वकमायविवेचनम्

श्रीगणेशदत्तचतुर्वेदी*

गृहस्वामी यस्य गृहस्य निर्माणं करोति तत् गृहं गृहस्वामिने सुखकरम्-आयुष्करं-स्वास्थ्यकरञ्च भविष्यति न वा इति विचारणार्थं विदुषां मते पिण्डानयनं महत्त्वपूर्णमस्ति। यथा आकाशे देवानां निवास: कल्प्यते तदर्थं द्यौ: इति देवानां निवासकारणत: आकाश: कथ्यते। तथैव भूमौ जीवानां वासनात् वास्तु कथ्यते। दिग्देशादिविभागेन अनेके भेदा: सन्ति। अखण्डभूमेरेक: खण्ड: पिण्डशब्देनोच्यते। जीवानां श्रेणीभेदेन पिण्डोऽपि विविधा भवति। सर्वे जीवा: सुखपूर्वकं जीवननिर्वाहं पिण्डोपरि निर्माणं कृत्वा कुर्वन्ति। अत: पिण्डसाधनम् अवश्यमेव करणीयम्। यथा विवाहे वर-वधूमेलापकविचार: सुखपूर्वकदाम्पत्यजीवनयापनहेतु अनिवार्य: भवति तथैव गृहेऽपि सुख-समृद्धि-स्वास्थ्यहेतु गृहस्वामी तथा गृहपिण्डयोर्मध्ये नक्षत्रगणनानुसारेण शुभाशुभत्वं ज्ञात्वा गृहस्य निर्माणं कर्तव्यम्। वास्तुनिर्माणे एकनाडी शुभं परन्तु विवाहे अशुभम्। विवाहे भिन्ननाडी शुभं परन्तु वास्तुनिर्माणे अशुभं भवति। पिण्डस्य अपि सप्तविंशतिनक्षत्राणि भवन्ति। अत: यस्मात् नक्षत्रात् भूस्वामी नक्षत्रगणनानुसारेण शुभं वर्तते तत् इष्टनक्षत्रं भवति। अत: इष्टनक्षत्रं तथा अष्ट-आयेषु य: विषम-आय: भवति स अभीष्टाय: कल्पनं कृत्वा इष्टनक्षत्रायानुसारेण गृहपिण्डनिर्मातव्यम्।

इष्टनक्षत्रसंख्यात: एकं हीनं कुर्यात् पुन: 152 संख्यया गुणयेत्। इष्ट आयात् एकं हीनं कुर्यात्। एकाशीति: (81) संख्यया गुणयेत्। एतयो: द्वयो: गुणनफलयो: योगे सप्तदश(17)संख्या योजयेत्। पुन: 216 संख्यया भागमाहरेत्। यदवशिष्यते तदेव पिण्डं भवति।

पिण्डे दैर्घ्यसंख्यया विभाजनेन या लब्धि आगच्छति सा पिण्डस्य विस्तार:। अनेन प्रकारेण विस्तारसंख्यया विभाजनेन या लब्धि: समायाति तत् दैर्घ्यं ज्ञेयम्। यथा वास्तुरत्नावल्यां तत्र राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत्। वशिष्ठोक्तं यत् नक्षत्रं व्यवहारनाम्ना विवाहोक्तमेलापकविधिना शुभदं स्यात्तदेव स्वेष्टर्क्षं परिकल्प्यम्। अथ ध्वजाद्यष्टायेषु विषम-आय ईप्सित: स्यात्स: स्वेष्टाय: कल्प्य:। तेन विस्तारदैर्घ्यज्ञानं कार्यम्।[1] एकनाडीविषयेऽपि वास्तुरत्नावल्यामुल्लेख: वर्तते -

**प्रभुपण्याङ्गनामित्रं देशग्रामपुरं गृहम्।**
**एकनाडीस्थितं भव्यं विरुद्धं वेधवर्जितमिति।।[2]**

---

* शोधच्छात्र:, वास्तुशास्त्रविभाग:, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. वा. र. व. पृ. 88,89
2. तत्रैव पृ. 88

तथा ज्यौतिषसागरेप्युक्तम् -

**सेव्यसेवकयोश्चैव गृहं तत्स्वामिनोरपि।**
**परस्परं मित्रध. कनाडी प्रशस्यते इति॥**

अत्रोदाहरणम् - नागराजस्य अनुराधानक्षत्रस्य रोहिण्या सह मेलापकः सम्भवतीति। इष्टभं रोहिणी कल्पितम्। विषमायः सिंहः (तृतीयः)

इष्टनक्षत्रसंख्या 4-1 = 3×152 = 456

आय (सिंहः) 3-1=2×81 = 162

456+162=618+17=635÷216 शेषम् 203

शेषम् इदमेव गृहस्य क्षेत्रफलं

अथ कल्पितदैर्घ्यम् = 29

अनेन 203÷29=7 लब्धिः

लब्धि 7 अस्य पिण्डस्य विस्तारः

अथ कल्पितविस्तृतिः 7

अनेन विभाजनेन 203÷7 = लब्धि 29 = दैर्घ्यञ्च

अस्मिन् विषये कालिदासः स्वकीयरचितज्योतिर्विदाभरणे आयत-चतुरस्र-विषमचतुर्भुजत्रिभुज-क्षेत्राणां फलानयनप्रकारान् प्रदर्शितवान्। यथा -

**क्षेत्रे भवेत्क्षेत्रफलं चतुर्भुजे तत्कोटिदोराहतिरेवमायते।**
**त्र्यस्रेऽपि दोः दोकोटिहतेर्दलं फलं दोः कोटिलम्बेर्विषमे च कल्पितम्॥**[1]

**विस्तारहस्तेन विभाजतानि पिण्डानि दीर्घाणि भवन्ति तानि।**
**नो वाऽथ दैर्घ्याभ्युदितैश्च हस्तैर्विभाजये विस्तारगा गृहस्थाः॥**
**शेषं चतुर्विंशतिसङ्गुणं तु विभाजयेद्धस्तमितैश्च तद्वद्।**
**भवन्ति तान्यङ्गुलसंज्ञकानि गृहे गृहस्थस्य कराऽनुमानात्॥**

पिण्डस्य विस्तारः हस्तेन विभाजनेन पिण्डस्य दैर्घ्यता प्राप्यते। यत् शेषं चतुर्विंशतिसंख्यया गुणनेन दैर्घ्यविभाजनेन लब्धि अङ्गुलात्मकं भवति। अङ्गुलशेषमष्टगुणनेन तथा पूर्वसंख्यया विभाजनेन

1. वा. र. 5/5

यत् तत् पिण्डे अङ्गुलमानं प्राप्यते।

चन्द्रविद्धं पिण्डं शुभं परन्तु सूर्यविद्धं पिण्डं शुभं न भवति। यथा -

**पूर्वपश्चिमतो दैर्घ्यं सपादं दक्षिणोत्तरम्।**
**शुभावहं चन्द्रविद्धं सूर्यविद्धं न शोभनम्॥**[1]

पूर्वपश्चिमतो यत् दैर्घ्यं दक्षिणोत्तर दैर्घ्यं सपादाधिकं चन्द्रविद्धं शुभं भवति। तस्य विपरीतं सूर्यविद्धमशुभं भवति।

**आयसाधनम्**

**विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्ततः।**
**यच्छेषं स भवेदायो ध्वजाद्यास्तेस्युरष्टधा॥**

**ध्वजो धूम्रो हरिश्वागौः खरेभौ वायसोऽष्टमः।**
**पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थितिः॥**[2]

भूविस्तारेण तद्दैर्घ्यं संगुण्य अष्टभिर्भाजने यच्छेषं तत् ध्वजादि क्रमेण आयः भवति। यथा - एकशेषे ध्वजः, द्विशेषे धूम्रः, त्रिशेषे सिंहः, चतुश्शेषे श्वानः, पञ्चशेषे गौः, षट्शेषे गर्दभः, सप्तशेषे हस्ती, अष्टशेषे वायसः (काकः) आयः भवति। केषाञ्चिन्मते काकस्थाने उष्ट्रः आयः भवति।

**एतेषां फलानि -**

**कीर्तिः शोको जयो वैरं धनं निर्धनतासुखम्।**
**रोगश्चेति गृहारम्भे ध्वजादीनां फलं क्रमात्॥**[3]

ध्वजाये कीर्तिः, धूमाये शोकः, सिंहाये जयः, श्वानाये वैरं, गवाये धनं, खराये धनाभावः, हस्त्याये सुखं, काकाये रोगञ्च क्रमशः फलं भवति।

| संख्या | 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 |
|---|---|---|---|---|---|---|---|---|
| आय-नामानि | ध्वजः | धूमः | सिंहः | श्वानः | गो | खरः | गजः | काकः |
| फलानि | कीर्तिः | शोकः | जयः | वैरः | धनं | निर्धनता | सुखम् | रोगः |
| प्रकारान्तरेण फलानि | बहुधनम् | भ्रमः | लक्ष्मीः | कलहः | धन-धान्यं | स्त्रीनाशः | पुत्रलाभः | शून्यता |
| दिक् | पूर्वा | अग्निः | दक्षिणा | नैर्ऋतिः | पश्चिमा | वायव्या | उत्तरा | ईशानी |

1. वा. र. 5/4
2. वृ. वा मा. आयाद्यानयनम् पृ. 58 श्लो. 3-4
3. वृ. वा मा. आयाद्यानयनम् पृ. 58 श्लो. 5

**अन्योऽपि** -

**ध्वजे बहुधनं प्रोक्तं धूम्रे चैव भ्रमो भवेत्।**
**सिंहे च विरलालक्ष्मीः श्वाने च कलहो भवेत्॥**

**धनधान्यं वृषे चैव खरेषु स्त्रीविनाशनम्।**
**गजाख्ये पुत्रलाभश्च ध्वांक्षे सर्वत्रशून्यता॥**[1]

ध्वजाये धनलाभः, धूम्रे भ्रमः, सिंहे लक्ष्मीः, श्वाने कलहः, वृषे धनधान्यलाभः, खरे स्त्रीविनाशः, गजे पुत्रलाभः, काके अशुभञ्च भवति।

**स्वस्वस्थाने ध्वजः श्रेष्ठो गजः सिंहस्तथावृषः।**
**ध्वजः सर्वगतो देयो वृषः नान्यत्र दापयेत्॥**

**वृष-सिंह-गजाश्चैव पुटकर्पटकोटयोः।**
**द्विपः पुनः प्रयोक्तव्योः वापी-कूप-सरःसु च॥**

**मृगेन्द्रमासनेव द्याच्छयनेषु पुनर्गजः।**
**वृष भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्॥**

**अग्निवेश्मसु सर्वेषु गृहे वह्नयुपजीविनाम्।**
**धूमं नियोजयेत् केच्छ्विानं म्लेच्छादिजातिषु॥**

**खरो वेश्यागृहे शस्तो ध्वाङ्क्षः शेषकुटीषु च।**
**वृषसिंहगजाश्चापि प्रासादपुरवेश्मसु॥**[2]

स्वस्वस्थानेषु यद्यपि सर्वे आयाः शुभाः भवन्ति तथापि ध्वज-गज-सिंह-वृषायाः विशेषेण शुभाः सन्ति। ध्वजायः सर्वत्र देयः। वृषः स्वस्थानादन्यत्र न देयः। वृषसिंहगजायाः पुटकर्पटकोटेषु देयाः। गजायः वापीकूपतडागेषु देयः। अग्निसम्बन्धिकार्येषु गृहेषु अग्निजीविकानां च धूम्रः आयः श्रेष्ठः। म्लेच्छादीनां धूमायः वेश्यमानां खरायः, कुट्यादिषु काकायः, प्रासाद पुर-गृहेषु वृषसिंहगजायाः श्रेष्ठाः भवन्ति।

**वशिष्ठमते आयविचारः**

**गजाये वा ध्वजाये वा गजानां सदनं शुभम्।**
**अश्वालयं ध्वजाये च खराये वृषभेऽपि वा॥**

---

1. बृहद्वास्तुमाला पृ. 60 श्लो. 12-13
2. बृहद्वास्तुमाला पृ. 60-61 श्लो. 14-18

उष्ट्राणां मन्दिरं कार्यं गजाये वा वृषे ध्वजे।
पशुसद्म वृषाये च ध्वजाये वा शुभप्रदम्।।
शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः।
अन्यत्र छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा।।
पादुकोपानहौ कार्यौ सिंहाख्येप्यथवा ध्वजे।
उक्तानामप्यनुक्तानां मन्दिराणां ध्वजः शुभः।।[1]

हस्तिशालायां गजायः ध्वजाय द्वौ आयौ शुभौ भवतः। अश्वशालायां ध्वजखरवृषायाः शुभाः वर्तन्ते। उष्ट्रशालायां गजवृषध्वजायाः शुभाः सामान्यपशुशालायां वृषध्वजायौ शुभौ भवतः। शयनगृहे वृषायः पीठे सिंहायः शुभः भवति। छत्रवस्त्रादिषु वृषध्वजायौ शुभौ भवतः। पादुकानां कृते सिंहध्वजायौ शुभौ भवतः। उक्तानामनुक्तानां सर्वेषां मन्दिराणां ध्वजायः शुभः वर्तते।

**च्यवनमते आयविचारः**

महानसेऽग्निशालायां गृहे वाग्न्युपजीविनाम्।
धूम्रं दद्यात्तथा श्वानं यवनान्त्यजयोर्गृहे।।
खरो वेश्यागृहे योज्यो ध्वांक्षः पक्षिपतेर्गृहे।
वृषे सिंहं गजं दद्यात्प्रासादे पुरमन्दिरे।।
वस्त्रेषु धर्मशालायां कुम्भस्तम्भे ध्वजे ध्वजः।
गोगजो भूगृहे देयः साधारणतृणौकसि।।
मन्त्रे शस्त्रे रथे सिंहो भाण्डागारे शुभो गजः।
धान्याम्बुस्थानगोश्वेभशालायां वृषभः शुभः।।[2]

पाकशालायां अग्निस्थानेषु अर्थात् यज्ञशालाद्यग्निस्थलेषु अग्नि-उपजीविनां धूम्रायः शुभः। यवनान्त्यजानां गृहेषु श्वानायः वेश्यानां गृहे खरायः, व्याधानां गृहे ध्वाङ्क्षायः, प्रासादनगरमन्दिराणां कृते वृषसिंहगजायाः श्रेष्ठाः। वस्त्रगृहधर्मशालाकुम्भस्तम्भध्वजारोहणेषु ध्वजायः मृत्तृणादिनिर्मितगृहे गोध्वजायौ, यन्त्रशस्त्ररथागारेषु सिंहायः, भाण्डागृहे गजायः, धान्यस्थानेषु जलाशयेषु च गौः आयः। वाजिशालाहस्तिशालासु वृषायः शुभो भवति।

**अन्यच्च -**

ब्राह्मणस्य ध्वजं दद्यात्सिंह दद्यात्तु क्षत्रिये।
वैश्यस्य च वृषं दद्याद्गजं शूद्रे सदार्पयेत्।।

---

1. वृहद्वास्तुमाला पृ. 61 श्लो. 19-22
2. तत्रैव पृ. 62 श्लो. 23-26

**चर्मकारगृहे धूम्रः श्वानोऽपि रजकस्य च।**
**खरश्चैव तथा वेश्या ध्वांक्षे चान्यत्र जातिषु॥[1]**

ब्राह्मणाय ध्वजायः, क्षत्रियाणां सिंहायः, वैश्यानां वृषायः, शूद्राणां गजायः, चर्मकाराणां धूम्रायः, रजकानां श्वानायः, वेश्यानां खरायः, अन्यजातिनां कृते काकाय शुभो भवति।

**आयानां स्वरूपाणि**

**ध्वांक्षः शिल्पितपस्विनां हितकरस्तेषां मुखं नामवद्**
**ध्वांक्षः काकमुखो बिडालवदनो धूमो ध्वजो मानुषः।**
**सर्वे पक्षिपदा हरेरिव गला हस्ता नरस्यैव तत्**
**प्राच्या सृष्टिगताः क्रमेण पतयो ह्यष्टौ च ते तन्मुखाः॥[2]**

काकाय शिल्पिनां तापसानाश्च गृहे शुभः। अस्यायस्य मुखं काकस्येव भवति। धूमायस्य वदनं बिडालस्येव ध्वजस्य मुखं मानववत् भवति। सिंहस्य मनुष्यस्येव शेषाणां स्वनामरूपं मुखं भवति। सर्वेषां चरणः पक्षिणाम् इव कण्ठः सिंहानामिव हस्तश्च मनुष्याणाम् इव भवति। पूर्वादिक्रमेण आयाः बलिनः भवन्ति। स्वदिशाभिमुखमेव आयानां मुखं भवति। अतः गृहमुखमपि एतन्मुखानुसारमेव कार्यम्।

**विशेषः -**

**सिंहायः सर्वथा त्याज्यो ब्राह्मणेन वृषेप्सुना।**
**सिंहाये चण्डता गेहे स्वल्पापत्यश्च जायते॥**

**ध्वजाये पूर्णसिद्धिः स्याद् वृषाय पशुवृद्धिदः।**
**गजाये सम्पदां सिद्धिः शेषायाः शोकदुःखदा॥[3]**

स्वकल्याणस्य इच्छुकब्राह्मणैः सिंहायस्य सदा परित्यागं करणीयं सिंहायेन गृहे क्रूरता तथा अल्पसन्ततिः जायते। ध्वजाये पूर्णसिद्धिः वृषाये पशुवृद्धिः, गजाये सम्पदां सिद्धिः, शेषायाः (धूम, श्वान, खर एवं ध्वाङ्क्षायाः) शोकदुःखकारकाः भवन्ति।

**ब्राह्मणादिजातिपरत्वेन ग्राह्यायाः**

**अग्रजानां ध्वजायः स्याद् ध्वजकुञ्जरगोमृगाः।**
**क्षत्रस्य ध्वजासिंहेभा वैश्यस्य शुभदाः स्मृताः॥**

---

1. उद्धृतं वास्तुसारः पृ. 110 श्लो. 56
2. बृहद्वास्तुमाला पृ. 59 श्लो. 6
3. वास्तुरत्नाकरः अ. 5 श्लो. 25-26

**ध्वजो मृगादि शूद्राणां सर्वेषां वृषभः शुभः।**
**हीनजातेः समाः देयाः सूक्ष्मकृत्येऽङ्गुलात्मकाः॥**[1]

ब्राह्मणानां ध्वजायः, क्षत्रियाणां ध्वजकुञ्जरगो मृगाः, वैश्यानां ध्वजसिंहगजः, शूद्राणां ध्वजः मृगश्चेति आयः शुभफलदः भवति। प्रायः गौ आयः सर्वशुभदः निम्नजातीनां समसंख्याकाः आयाः (धूम-श्वान-खर-ध्वाङ्क्षः) शुभाः। अतः सूक्ष्मकृत्ये पिण्डग्रहणं कृत्वा अङ्गुलात्मकः आयः साधनीयः।

**राशिपरत्वेन आयविचारः**

**कर्कवृश्चिकमीनानां ध्वजायः शुभदो मतः।**
**वृषभाय शुभः प्रोक्तो मेषसिंहधनुर्भृताम्॥**

**तुलामिथुनकुम्भानां गजायो वाञ्छितप्रदः।**
**वृषकन्यामृगाणाञ्च सिंहायः शुभदो भवेत्॥**[2]

कर्कवृश्चिकमीनराशीनां ध्वजायः, मेषसिंहधनुराशीनां वृषायः, मिथुनतुलाकुम्भराशीनां गजायः, वृषकन्यामकरराशीनां सिंहायः, शुभदो भवति।

1. बृहद्वास्तुमाला पृ. 59 श्लो. 7-8
2. बृहद्वास्तुमाला पृ. 60 श्लो. 9-10

ISSN - 0974-8946
जुलाई-सितम्बर 2018



# नेत्ररोगपरिज्ञाने केचन विशिष्टयोगाः

श्रीसुरेन्द्रकुमारः*

स्वास्थ्यस्योपयोगिता सर्वत्रैव दृश्यते। ये स्वस्था हृष्टाः पुष्टाश्च भवन्ति, ते सोत्साहं स्वीयं कर्म कुर्वन्ति। ते न कुतश्चिद् भीताः भवन्ति। सभासु समाजेषु च तेषां शरीरं वीक्ष्य जनाः प्रसन्ना भवन्ति। ये रुग्णाः निर्बलाश्च भवन्ति, ते निर्बलत्वात् सदा दुःखमेव लभन्ते। अतो यथा विद्याध्ययनादिकमावश्यकम्, तथैव स्वास्थ्यरक्षापि अतीवावश्यकी विद्यते।

स्वास्थ्यसंरक्षणं मानवस्य प्रथमं कर्तव्यमिति सर्वसम्मतम्[1]। धर्मादिपुरूषार्थाणामन्यतमसाधनभूतस्य शरीरस्य लक्षणं तावदुच्यते-''शीर्यते प्रतिक्षणमपचीयत इति शरीरम्'' अर्थात् प्रतिक्षणं विनाशोन्मुखं यत्तच्छरीरमिति फलति। यद्यपि शरीरमनित्यं नश्वरमित्यस्माकं धर्मशास्त्रेषु पौनः पुन्येन प्रतिपादितं तथापि मानवः शरीरमाध्यमेनैवाखण्डमनन्तं सनातनं यत्तत्वं क्षमते। अत आरोग्यतासंरक्षणमावश्यकम्।

दृश्यन्ते खलु अत्याधुनिके समाजे यत् कश्चिज्जनः जन्मकालादेवान्धः, कश्चित् काणः, कश्चित् कालान्तरे नेत्ररोगार्तः, कश्चित् अल्पे वयसि एव उपनेत्रं धारयति। कश्चित् अशीतिवर्षं यावदपि उपनेत्रं नैव धारयति। रोगोऽयं बहुव्यापित्वेन दरीदृश्यते।

**नेत्रम्-** नीयते नयति वा अनेनेति नेत्रं करणार्थे ष्ट्रन प्रत्ययः। लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी दृग्दृष्टी च इत्यमरः।[2] अन्येषु सर्वेषु ज्ञानेन्द्रियेषु नेत्रं महत्त्वपूर्णमस्ति, तस्मात् मानवेनास्य रक्षार्थं सदैव तत्परो भवितव्यम्, यतः अन्धमानवाय दिवानक्तं समेव वर्तते। संसारोऽयं व्यर्थ एव प्रतीयते[3]।

आधुनिकचिकित्सादृष्ट्या नेत्ररोगाणां बहवः प्रकाराः प्राप्यन्ते, तथा च रोगस्यास्य बहूनि कारणानि, लक्षणान्युपचाराश्च दृष्टिपथे समधिगच्छन्ति। आयुर्वैदिकग्रन्थेष्वपि नेत्ररोगस्य बहवः प्रकाराः प्रोक्ताः सन्ति। चरकसंहितानुसारं वातविकाराः अशीतिः (८०) प्रकारकाः, पित्तविकाराः चत्वारिंशत् (४०) प्रकारकाः, कफविकाराश्च विंशतिविधाः(२०) प्रतिपादिताः।

* शोधच्छात्रः, ज्योतिषविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. शरीरमाद्यं खलु धर्मसाधनम्।
2. अमरकोशः, 2/मनुष्यवर्गः श्लो. 93
3. चक्षूरक्षायां सर्वकालं मनुष्यैर्यत्नं कर्तव्यो जीविते यावदिच्छा।
   व्यर्थो लोकोऽयं तुल्यरात्रिदिवानां पुंसामन्धानां विद्यमानेऽपि वित्ते।। अ.हृ.उ. 13/18

## नेत्ररोगप्रकारचक्रम्




होराशास्त्रे विभिन्ननेत्रद्योतकाः योगाः उपलभ्यन्ते। यथा -

**(क) जन्मान्धयोगः (ख) रात्र्यन्धयोगः (ग) काणयोगः (घ) तिर्यक्दृष्टियोगः (ङ) बुद्बुदेक्षणयोगः (च) नेत्रविकलयोगश्चेत्यादयः।**

एते ग्रहाणामन्तर्भावेन प्रादुर्भवन्ति[1]।

**नेत्ररोगद्योतकग्रहाः-**

सूर्यचन्द्रौ नेत्रद्योतकौ ग्रहौ स्तः। एतयोः जन्मकालिक-शुभाभुभस्थित्यनुगुणं नेत्रविचारः कर्तव्यः। एतयोरपि सूर्यः दक्षिणनेत्रस्य[2] चन्द्रश्च वामनेत्रस्य कारको[3] भवति। जन्मकाले यदि एतौ बलिनौ स्याताम् , तदा जातकस्य नेत्रेऽपि शोभने भवतः। एतयोः निर्बलयोः सतो जातकः येन केनापि नेत्ररोगेण ग्रस्तो भवति। सूर्यचन्द्रौ येन ग्रहेण सह सम्बन्धं कुर्वन्तौ स्तः, तस्य ग्रहस्य शुभाशुभ-दृष्टिवशात् युतिवशात् वा प्रकृतिस्वभावानुगुणमेव नेत्ररोगमुत्पादयन्ति[4]। भौमोऽपि नेत्ररोगकारको ग्रहोऽस्ति[5]। भौम पित्तकारको ग्रहः, अतः पित्तकारणाद् अधिकोष्णत्वाच्च एषः नेत्ररोगं जनयति। राहुणा अपि नेत्ररोगस्य

---

1. द्रव्यव्यये तु कालस्य पुरूषस्य तु लोचने।
   ग्रहप्रभावप्रकारेण अन्धं काणं सबुद्बुदम्।। होरारत्नम्- अ.6/1
2. भर्तव्यमखिलं वित्तं वाणी चक्षुश्च दक्षिणम्। प्रश्नमार्ग.श्लो-04
3. पपं व्ययं पतनं निरये वाममम्बकम्। प्रश्नमार्ग.श्लो-14
4. यस्यग्रहस्य योदोषः पित्तादिष्विह कीर्तितः।
   तेन रोगे तु वक्तव्ये वाच्यस्तदोषजो गदः।। प्रश्नमार्ग.श्लो-29
5. चोरभूपायुधाग्निभ्यो भयं स्कन्दाच्च भैरवात्।
   कलहज्वरपित्तासृक्शिरानेत्रगदरन् कुजः।। प्रश्नमार्ग-1/खण्ड-7/8

संभावना भवति, तस्मात् राहुरपि नेत्ररोगकारको ग्रहः कथ्यते[1]।

**नेत्रद्योतकभावाः-**

तन्वादिद्वादशभावेषु द्वितीयद्वादशभावौ नेत्रद्योतकौ स्तः[2]। द्वितीयभावात् दक्षिणनेत्रस्य विचारः क्रियते। तथा च द्वादशभावात् वामनेत्रस्य विचारः क्रियते[3]। एतौ भावौ यदि स्वस्वामिना सह भवेतामथवा स्वस्वामिना दृष्टौ भवेतां तदा जातकस्य सुलोचनौ भवतः। यदि एतयोः भावयोः पापग्रहाणां दृष्टिर्भवेत्, युतिः भवेदथवा अन्यः कोऽपि सम्बन्धः पापग्रहैः सह स्यात् तर्हि जातको नेत्ररोगी भवति।

षष्ठाष्टमद्वादशभावा अनिष्टभावा इत्याचार्याः मन्यन्ते। द्वितीयभावस्याधिपतिर्यदि एतेषु भावेषु भवेत्तर्हि नेत्ररोगं जातकाय यच्छति। द्वादशभावस्याधिपतिर्यदि एतेषु भावेष्ववस्थितो भवेत्तदा नेत्रविकारं भवति। एतेषां भावाधिपानां दृष्टिर्यदि द्वितीयद्वादशभावाधिपतयोः भवेत्तदापि जातकः नेत्ररोगी भवति। तथा च षष्ठाष्टमद्वादशभावाधिपतिभिः द्वितीयद्वादशभावौ दृश्येते तर्हि जातकः नेत्ररोगी भवति। उपर्युक्तेष्वनिष्टभावेष्वष्टमभावोत्यन्तकष्टप्रदो भवति। अष्टमेशेन सह नेत्रभावानां सम्बन्धः नेत्रसम्बन्धितमत्यधिकं कष्टं विकारं वा प्रददाति[4]।

**(क) जन्मान्धयोगः -**

ज्योतिषशास्त्रे योगोऽयं बहुधा दृश्यते तथा लोकेऽपि बहवः जनाः जन्मान्धाः भवन्ति। ग्रहभावयोगेन कथं रोगोऽयं सम्भवति निम्नलिखितैः योगैः ज्ञास्यामः।

➢ शनिः सूर्यचन्द्राभ्यां षष्ठस्थो द्वादशस्थो वा भवेत्तदा जातकोऽन्धो भवति[5]।

➢ द्वितीये भावे भौमः भवेत्तदा जातकः नूनमेवान्धो भवति[6]।

➢ शनिभौमौ च त्रिकोणे स्यातां तर्हि उक्तयोगेष्वुत्पन्नो जातकः जन्मान्धो भवति[7]।

➢ द्वादशे स्थाने वा नपुंसकग्रहौ (बुधशनैश्चरौ) भवेताम्। लग्ने च न कोऽपि ग्रहो भवेत्तदा एतादृशे ग्रहयोगे समुत्पन्नो जातकः दृष्टिहीनो भवति।[8]

---

1. प्रश्नमार्ग.श्लो-29 प्रश्नमार्ग-1/खण्ड-7/14
2. द्रव्यव्यये तु कालस्य पुरूषस्य तु लोचने। होरारत्नम्-6, श्लो-8
3. भर्तव्यमखिलं वित्तं वाणी चक्षुश्चदक्षिणम्।
4. प्रश्नमार्ग-14/29
5. कुजे धनेशो रवीन्द्वोः शत्रुव्यये स्थानगतेऽर्कजेऽन्धः।। जातकपरिजातः, श्लो. 56
6. जातकपरिजातः, श्लो. 56
7. फलितमार्तण्डः -भावाफलाध्यायः,श्लो.26
8. वृद्धयवनजातकम्,लग्नवर्गफलाध्यायः/263

**( ख ) रात्र्यन्धयोगाः -**

नेत्ररोगेषु रोगोऽयमन्यतमः। रात्रावन्धेति रात्र्यन्धः। अर्थाद्योगेऽस्मिन् जातकः (वास्तविकरूपेण) वस्तुतस्तु अन्धो न भवति परञ्च रात्रावंधकारे वा द्रष्टुं न शक्नोति।

➢ यदा जन्माङ्गचक्रे द्वितीयभावे सूर्येण सह चन्द्रः स्यात्तदा जातकः रात्र्यन्धो भवति[1]।

➢ शुक्रेण सह चन्द्रः त्रिकस्थो भवेच्चेत्तदा जातकः रात्र्यन्धो भवति[2]।

➢ चन्द्रशुक्रौ यदि नेत्रेशेण सह लग्नस्थौ भवेतां तथा च तौ स्वराशिषु (वृष-कर्क-तुला) स्वोच्चस्थौ (वृषे-मीने) न स्यातां शुभग्रहैश्च नावलोक्येतां तदा जातकः रात्र्यन्धरोगेण ग्रस्तो भवति[3]। योगस्यास्य विषये गणेशकविना जातकालङ्कारेऽप्युक्तं "शुक्रः सेन्दुस्त्रिकस्थो जनुषि निशि नरः प्राप्नुयादन्धकत्वम्" इति।

**( ग ) काणयोगः -**

रोगोऽयं प्रायशः जन्मकालादेव भवति। रोगेऽस्मिन् जातकः एकेन नेत्रेण द्रष्टुं शक्नोति। नेत्रद्वयसत्वेऽपि अन्तः विभागानामभावाज्जातकः एकैव नेत्रेण द्रष्टुमर्हति।

➢ क्रुरग्रहैः युतः शुक्रः धनभावे भवेत्तदा जातक अक्ष्णा काणो भवति।

➢ शुक्रबृहस्पतिभ्यां दृष्टो भौमश्चन्द्रो वा लग्ने भवेत् तदा जातकः काणो भवति[4]।

➢ सप्तमभावस्थ सिंहराशौ स्थितः चन्द्रः भौमेनावलोकितो भवेत्तदा जातकः काणो भवति।

**( घ ) वक्रदृष्टियोगः -**

यस्य जातकस्य दृष्टिः वक्रा अर्थात् तिर्यक् भवति सः वक्रदृष्टियुतो भवति। रोगोऽयं जन्मकालादपि भवति कालान्तरेऽपि भवितुमर्हति। होराशास्त्रे रोगस्यास्य योगाः बहुधा न प्राप्यन्ते तथापि केनचिदाचार्येण रोगस्यास्य विषये प्रतिपादितम्। रोगेऽस्मिन् जातकस्य दृष्टिः वक्रा भवति।

➢ सूर्यचन्द्रौ यदि वक्रीग्रहस्य राशौ भवेताम् अथवा षष्ठभावे द्वादशभावे वा अवस्थितो भूत्वा पापग्रहैः अवलोक्यमानौ भवेतां तदा जातकः वक्रनेत्रो भवति[5]।

---

1. चन्द्रादित्यौ धने स्यातां निशान्धो मनुजो भवेत्।। भावकुतूहलम्, 15/5
2. सेन्दुः शुक्रस्त्रिकस्थो निशान्धकः। जातकतत्त्वम्-सू.सं.-263
3. जातकतत्त्वम्-सू.सं.-264
4. लग्ने भौमे वा चन्द्रे शुक्रेज्यदृष्टे काणः।। जातकतत्वम् , सू.सं. 273
5. जातकतत्त्वम्-सू.सं.-226

➢ चन्द्रभौमौ यदि एकस्मिन् नवांशे भवेतां तदापि जातको वक्रनेत्रो भवति[1]।

➢ जनुषि भौमः लग्ने स्वनीचनवांशगो भवेत् तथा च पापग्रहाणां वर्गे भवेत् तदा जातकस्य वक्रदृष्टिः भवति[2]।

**(ङ) बुदबुदेक्षणयोगः -**

अस्मिन् योगे जातकः पुनः पुनः नेत्रे उद्घाटयति निमीलयति च। योगोऽयं शास्त्रे बहुधा न प्राप्यते परञ्च व्यवहारे पश्यामश्चेत् बहवः जनाः बुदबुदेक्षणाः भवन्ति।

➢ जन्माङ्गचक्रे बुधकुजाभ्यां दृष्टौ सूर्यचन्द्रौ बुद्बुदेक्षणं कुरुतः[3]।

➢ नेत्रलिप्सावस्थागतकेतुः जातकं बुदबुदनेत्रयुतं करोति[4]।

➢ जन्माङ्गचक्रे द्वितीये द्वादशे वा भावे पापग्रहाः भवेयुः द्वितीयेशः द्वादशेशो वा बली भवेत्तदा क्रूरग्रहैः व्याप्तेऽस्मिन् योगे जातको बुदबुदेक्षणः भवति।

**(च) नेत्रविकलयोगः / नेत्रपीडायोगः-**

➢ चन्द्रसौम्यसुरेज्यभृगुसूर्यपुत्राश्च जनुषि एकस्मिन् राशौ स्युश्चेत् जातकः विकलनेत्रः भवति[5]।

➢ जनुषि व्ययभावे स्थितः केतुः नेत्रयोः महापीडा प्रददाति[6]।

➢ धनेशः शुक्रेण सह भवेत्तर्हि जातकः नेत्ररोगी भवति।

**नेत्ररोगोद्भवकालः -**

➢ विंशोत्तरीमहादशायां यदा सूर्यस्य महादशा आगच्छति तदा जातकाय नेत्रतापो भवति। राहोः महादशायां नेत्ररोगो भवति[7]।

➢ कर्कराशिस्थस्य शनैश्चरस्य महादशायां नेत्ररोगः भवति।

➢ शुक्रमहादशायां सूर्यस्यान्तर्दशायां नेत्ररोगः भवेत्[8]।

---

1. जातकतत्त्वम्-सू.सं.-227
2. नीचांशके तैमिरिकं निशान्धं पापस्थवर्गे त्वथ वक्रदृष्टिम्। वृद्धयवनजातकम्, ल.-10
3. आग्नेयसौम्यदृष्टौ रविशशिनौ बुदबुदेक्षणं कुरुतः।। सारावली, 8/54
4. बृहत्पारपशरहोराशास्त्रम्, ग्रहवस्थाफलाध्यायः, श्लो. 153
5. जातकपरिजातः, अ.8,श्लो. 35
6. भावप्रकाशः, अध्यायः-2, चन्द्रफलाध्यायः-12
7. फलदीपिका, दशाफलाध्यायः-18
8. जातकपरिजातः, दशाफलाध्यायः-159

**उदाहरणम् -**

जन्मदिनाङ्कः - 20-09-1980, जन्मसमयः - 20:54:00, जन्मस्थानम् - सोलन (हि.प्र.)




जन्माङ्गचक्रेऽस्मिन् द्वितीयेशः शुक्रः क्रूरग्रहेणावस्थितोऽस्ति, दशमस्थचन्द्रकेतुभ्यां दृष्टः कुण्डल्यामस्यां नेत्रकारकौ सूर्यचन्द्रौ अपि पापाक्रान्तौ स्तः। त्रिक्स्थे स्थितः सूर्यः स्वशत्रुणा पापग्रेहण च मन्देन युतोऽस्ति, तथा च चन्द्रः स्वशत्रुराशौ क्रूरशत्रुग्रहेण केतुना युतः, पापग्रहभौमेन च दृष्टोऽस्ति।

उदाहरणम् -

जन्मदिनाङ्कः - 27-01-1993

जन्मसमयः - 08:37:00

जन्मस्थानम् - शिमला (हि.प्र.)



**काणयोग: -**

शुक्र: क्षीण-चन्द्रेण सह धनभावे अस्ति, जातकतत्वमतानुसारमेतादृशे ग्रहयोगे समुत्पन्नो जातक: काणो वा मन्दलोचन: भवति -

धने वा व्यये शुक्रे पापयुते काणो वा मन्दलोचन:।

तस्मात् जातकोऽयं काण: तु नास्ति परञ्च मन्दलोचनोऽस्ति।

**रोगशमनोपाया: -**

ज्योतिषशास्त्रे व्रतोपवास:, मन्त्रजपं, रत्नधारणं, तत्सम्बन्धिवस्तूनां दानं, यन्त्रधारणेन च समुत्पन्नानां/जायमानानां रोगाणां शान्तिर्भवतीति कथितमाचार्यै:। अष्टाङ्गहृदयेऽपि प्रतिकूलग्रहस्य अथर्ववहिता शान्ति: कर्तव्या इति निर्दिष्टमस्ति[1]।

देवताविप्रवन्दनात् प्रत्यहं गुर्वाज्ञापालनात्, सज्जनसम्भाषणात्, श्रुति-कथा श्रवणात्, होमविधानाद्, यज्ञसंदर्शनान्मनोभावनापवित्रकरणाद्, जपदानसम्पदानाच्च ग्रहकृता आपत्तयो विलीना: भवन्तीति। एतान् निदानान् श्रद्धया कृत्वा नेत्ररोगी नेत्ररोगान्मुक्तो भविता। तथा च भविष्ये जायमानेभ्य: नेत्रसम्बन्धिरोगेभ्य: कालान्तरजायमानेभ्य: दुर्घटनाभ्यश्च निश्चयेन विमुक्तो भवितुमर्हति।

---

1. अथर्वविहिता शान्ति: प्रतिकूलग्रहार्चनम्। भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक्।।

ISSN - 0974-8946
जुलाई-सितम्बर 2018

शोधप्रभा
वर्षः 43, तृतीयाङ्कः

# ब्राह्मणग्रन्थों में शिक्षा एवं पर्यावरण

डॉ. नारायण प्रसाद भट्टराई*

प्राचीन भारतीय वाङ्मय में ब्राह्मण ग्रन्थों का अति महत्त्वपूर्ण स्थान है। ब्राह्मण ग्रन्थ ज्ञानागार के रूप में ख्याति प्राप्त है। ब्राह्मण ग्रन्थ वेदों के दुरुह विषयों की व्याख्या में अपना समय व्यतीत करते हैं। उनमें जहाँ कर्मकाण्ड की विस्तृत व्याख्या है, वहीं पर शिक्षा और पर्यावरण की विविध मानदण्डों को भी समझाया गया है। ब्राह्मण ग्रन्थों में शिक्षा तथा तत्कालीन समाज के शैक्षिणिक जीवन पर विस्तार से विचार किया गया है। सूक्ष्मेक्षिका से अध्ययन करने पर पर्यावरण पर विस्तृत वक्तव्य पढ़ने को मिलता है।

मानव का जन्म वैदिक परम्परा के अनुसार मानव के तीन जन्म होते हैं। शतपथ ब्राह्मण में तीन जन्मों का वर्णन निम्न रूप में मिलता है-

**त्रिर्हवै पुरुषो जायते। एतन्नु एव मातुश्चाधि।**
**पितुश्चाग्रे जायते अथ यं यज्ञ उपनमति स।।**

**यद्यजते तद् द्वितीयं जायते अथ यत्र म्रियते।**
**यत्रैतमग्नावभ्यादधति स यत्ततः सम्भवति तत् तृतीयं जन्मजायते।।**[1]

अर्थात् प्रथम जन्म मातृ-पितृ के संयोग से माता के गर्भ से होता है। यह जन्म अति साधारण है, सभी मुनष्यों का होता है। द्वितीय जन्म यज्ञ द्वारा होता है और तृतीय जन्म पुनर्जन्म है, जो मरने और अग्नि को समर्पित होने के बाद मनुष्य को प्राप्त होता है। द्वितीय जन्म की तुलना में प्रथम जन्म का कितना कम महत्व है, यह शतपथ ब्राह्मण के अध्ययन से सुस्पष्ट हो जाता है-

**मनुष्यो ह वा अस्यातः पुराजन्म भवति।**
**इदं ह्याहू रक्षांसि योषितमनुसचन्ते।।**

**तदुत रक्षांस्येव रेत आदधतीति।**
**अथात्राद्धा जायते यो ब्राह्मणो यो यज्ञाज्जायते।।**

---

* आचार्य वेदविभाग, श्रीमाता वैष्णव देवी गुरुकुल, कटड़ा, जम्मू और कश्मीर।

1. शतपथब्राह्मण 11/2/1/1

**तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्।**
**ब्राह्मणो हिजायते यो यज्ञाज्जायते।।[1]**

अर्थात् उपनयन अथवा दीक्षा के पूर्व जो जन्म होता है वह निश्चित रूपेण निकृष्ट जन्म होता है। पूर्वजों का कथन है कि उस जन्म में राक्षसों के वीर्य का भी सम्मिश्रण रहता है। अत: वास्तविक जन्म वह है जो ब्रह्म (वेद) और यज्ञ द्वारा सम्पन्न होता है। ब्राह्मण क्षत्रिय और वैश्य यज्ञ से ही उत्पन्न होते हैं। अत: क्षत्रिय और वैश्य को भी ब्राह्मण कह सकते हैं।

प्रथम जन्म प्रकृति में होता है और द्वितीय जन्म संस्कृति में। भाव यह है कि प्रथम जन्म प्राकृतिक होता है और द्वितीय जन्म सांस्कृतिक या शैक्षिक है। संस्कृति और संस्कार ही मनुष्य को अन्य प्राणियों से भिन्न करती है। वैदिक परम्परा के अनुसार मनुष्य का शिक्षा में जन्म उपनयन-संस्कार तथा वेदारम्भ संस्कार से होता है। ये संस्कार शिक्षा, संस्कृति और आचार्यकुल या विद्यालय के लिए प्रवेश पत्र है। यह प्रवेश पत्र व्रतहीनों के लिए नहीं है। यह उनके लिए है जो शिक्षा प्राप्ति के लिए व्रत लेने को तैयार हों। शिक्षा के प्रति प्रतिश्रुत और प्रतिबद्ध हों। अनृत् से सत्य की ओर संक्रमण की निष्ठा रखते हों। जिसका सर्वप्रथम संकेत हमें यजुर्वेद में मिलता है-

**अग्नेव्व्रतपते व्रतञ्चरिष्यामि तच्छकेयन्तन्मे राध्यताम्। इदमहमनृतात्सत्यमुपैमि।।[2]**

**व्रताचरण से लाभ-**

व्रत कर्म करने को कहते हैं।[3] श्रेष्ठतम कर्मों को व्रत कहा गया है। शतपथ ब्राह्मण में श्रेष्ठतम कर्मों को यज्ञ कहा गया है।[4] यज्ञरूपी व्रत से दीक्षा प्राप्त होती है। दीक्षा से दक्षिणा मिलती है। दक्षिणा से श्रद्धा प्राप्त होती है और सर्वान्ते श्रद्धा से सत्य (अमृत) की प्राप्ति होती है। इस व्रताचरण से लाभ के सम्बन्ध में यजुर्वेद उद्घोषणा करता है-

**व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धयासत्यमाप्यते।।[5]**

## 1. शिक्षा का स्वरूप

ब्राह्मणग्रन्थों और उपनिषदों में शिक्षा का चरम उद्देश्य विमुक्ति है। इस कारण इसके दो पक्ष हैं परा और अपरा। ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद, शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द

---

1. शतपथब्राह्मण 3/2/1/40
2. यजुर्वेद 1/5
3. व्रतमितिकर्मनाम, निरुक्तम्
4. यज्ञो वै श्रेष्ठतमं कर्म। शतपथब्राह्मण।
5. यजुर्वेद 19/30

और ज्योतिष का सम्बन्ध अपरा विद्या से है। परा विद्या अक्षर परमेश्वर से सम्बन्धित है।[1] दोनों में कोई पारस्परिक वैमनस्य भी नहीं है। ऐहिक जीवन में वेद तथा वेदाङ्गों की महनीयता परमावश्यक है।

तत्कालीन समाज में शिक्षा के द्वारा ब्रह्मज्ञान कराया जाता था। विद्या और अविद्या (ज्ञान और कर्म) की महिमा का प्रतिपादन करते हुए लिखा है कि जो केवल अविद्या की उपासना करते हैं वे अन्धकारमय लोक में जाते हैं। जो केवल विद्या में रत रहते हैं वे उससे भी अधिक गाढ़ अन्धकारमय लोक में जाते हैं।[2] शिक्षा के माध्यम से अमृत की प्राप्ति होती थी। छात्र अपने आचार्य से प्रार्थना करता है- 'हे आचार्यवर्य! मुझे असत्य से हटाकर सत्य की ओर ले चलें, मुझे अन्धकार से हटाकर प्रकाश की ओर ले चलें, आप मुझे मृत्यु से हटाकर अमृत (मोक्ष) की ओर ले चलें। मुझ पर आपकी अतिकृपा होगी'।[3]

## शिक्षा शब्द का प्रयोग

शिक्षा शब्द का प्रयोग हमें वेदों के बाद सर्व प्रथम शतपथ ब्राह्मण में मिलता है।[4] इसका अर्थ सीखना है। शिक्षा में दम, दान तथा दया का निवास अनिवार्य रूप से होना चाहिए। शिक्षा शब्द 'शिक्ष्' धातु से बनता है। शिक्षा प्रयोग विद्या ग्रहण के लिए हुआ है।[5] शिक्षा शब्द संकुचित तथा विस्तृत उभयविध अर्थों में प्रयुक्त हुआ है। आचार्य शङ्कर के मतानुसार जिसके द्वारा वर्णादिका उच्चारण सीखा जाय, वह शिक्षा है। अथवा जिससे वर्णादि सीखे जायें, वह शिक्षा है।[6] इस विवेचन के मूल में सीमित दृष्टि का निर्वाह हुआ है। स्वाध्याय और प्रवचन से प्रमाद न करने का विधान व्यक्ति को उच्छृङ्खल नहीं होने देता था। इस अर्थ में तत्कालीन शिक्षा ऐसी प्रक्रिया थी जो जीवन पर्यन्त चलती रहती थी। इसकी पूर्णता तब होती थी जब व्यक्ति आत्मसाक्षात्कार कर लेता था।

## धार्मिक विकास

आचार्य कुलों में यज्ञादि निरन्तर होते थे। अतः शिष्यों को याज्ञिक परम्परा से अवगत कराया जाता था। देवकार्य और पितृकार्य से प्रमाद न करने का उपदेश समाज में ऋग्वेद, यजुर्वेद,

1. अथपरायया तदक्षरमधिगम्यते। मुण्डकोपनिषद् 1/1/5
2. अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते।
   ततोभूय इव ते तमो य उविद्यायां रताः।। शतपथब्राह्मणम् 14/4/4/10
3. असतो मा सद्गमय तमसो मा ज्योतिर्गमय।
   मृत्योर्माऽमृतङ्गमय।। शतपथब्राह्मणम् 14/1/3/28
4. शिक्षेद्मं दानं दयामिति। शतपथब्राह्मण 14/5/2/3
   शीक्षां व्याख्यास्यामः। तैतिरीयोपनिषद् 1/2/3
5. शिक्षविद्योपादाने। धातुपाठ, भ्वादिगण
6. तैत्तिरीयोपनिषद् 1/2/1 शाङ्करभाष्य

सामवेद, अथर्ववेद, इतिहास, पुराण, उपनिषद्, श्लोक, सूत्र, व्याख्यान और अनुव्याख्यान इत्यादि का उच्चकोटि के साहित्यों में महत्त्वपूर्ण रूप से था। इसके साथ यह भी मान्यता थी और आज भी है कि ये सभी साहित्य ईश की कृपा व प्रेरणा की देन है।[1]

## पाठ्यक्रम

उपनिषद् और ब्राह्मण ग्रन्थों में बहुत समानता है। क्योंकि उपनिषदें ब्राह्मण ग्रन्थों के गर्भ से उद्भूत हैं। पाठ्य विषयों की बहुलता इस बात को सिद्ध करती है कि आत्मा के विवेचन के साथ ही साथ अन्य विषयों का भी चिन्तन होता था। इन विषयों के ज्ञाता भी सम्भवतः मन्त्रवित् कहलाते थे। पाठ्य विषयों में वेद चतुष्टय, इतिहास, पुराण, व्याकरण, अङ्कगणित, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पविद्या, नृत्यसंगीत वाद्यविद्या, यज्ञशास्त्रादि विद्याएँ अनिवार्यरूप से रखी गई थी।[2] ब्रह्म विषयक वाद विवाद ब्रह्मोद्य कहलाते थे।[3]

अतः उसमें दक्षता प्राप्त कराने के लिए तर्कशास्त्र का अध्ययन अपेक्षित था। भगवान् आदि शङ्कराचार्य 'वाको वाक्यं' का अर्थ तर्कशास्त्र से लेते हैं।[4] भद्रदेश का काप्य पतञ्चल के यहाँ यज्ञशास्त्र का अध्ययन-अध्यापन होता था। आरुणि उद्दालक ने वहाँ जाकर इसका अध्ययन किया था।[5]

## शिक्षण पद्धति

तत्कालीन समाज में शिक्षा देने की अनेक पद्धतियाँ थीं। जिसमें कण्ठस्थ करने की पद्धति, प्रवचन, व्याख्यान, प्रश्नानुप्रश्न तथा प्रयोगात्मक पद्धतियाँ थीं। याज्ञवल्क्य का कथन था कि मैं व्याख्यान करुँगा।[6] तुम मेरे व्याख्यान वाक्यों का चिन्तन करना।[7] व्याख्यानों को रोचक बनाने के लिए दृष्टान्तों का आश्रय लिया जाता था। दैनन्दिन जीवन के प्रसङ्गों में पाये जाने वाले तत्त्वों को दृष्टान्त के रूप में प्रस्तुत किया जाता था। उदाहरणार्थ- आत्मा से जगत्-सृष्टि बताते हुए कहा है कि जैसे मकड़ी से तन्तु निकलते हैं तथा जैसे अग्नि से चिनगारियाँ निकलती हैं, उसी प्रकार आत्मा से समस्त प्राण, लोक, देवगण तथा भूतादि विविधरूप से उत्पन्न होते हैं।[8] गार्गी से याज्ञवल्क्य ने ब्रह्मलोक के विषय में अतिप्रश्न न करने के लिए कहा। अतिप्रश्न करने से मस्तक कट जाने की

---

1. देवपितृकार्याभ्यां न प्रमदितव्यम्। तैत्तिरीयोपनिषद् 1/11/2
2.. शतपथब्राह्मण 14/2/4/10
3. छान्दोग्यब्राह्मण 7/1/2
4. शतपथब्राह्मण 14/3/1/1
5. वाको वाक्यम् तर्कशास्त्रम्। छान्दोग्योपनिषद् 7/1/2 शाङ्करभाष्य।
6. मद्रेष्व सामपतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानाः। शतपथब्राह्मण 14/3/7/1
7. व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्व। शतपथ 14/4/2/2
8. बृहदराण्यकोपनिषद् 9/2/2

बात कही गई है।[1]

अजातशत्रु गार्ग्य को हाथ पकड़ कर सोते हुए पुरुष के पास ले जाता है। उसके नाम पुकारने पर वह नहीं उठ पाया। किन्तु सुषुप्त पुरुष के हाथ को दबाकर जगाने से उठ खड़ा होता है। इस प्रकार अजातशत्रु के द्वारा पुरुष के अब्रह्मत्त्व की सिद्धि के लिए इसी विधि का आश्रय लिया गया है। प्रयोगात्मक पद्धति का बहुलता के साथ प्रयोग उस युग के शिक्षण में होता था।[2]

पिता को भी आचार्य के रूप में ब्राह्मणों में निर्दिष्ट किया गया है। श्वेतकेतु ने पिता से शिक्षा ली थी किन्तु क्षत्रिय बन्धु ब्राह्मण के पास जाकर भी उसने अध्यात्म लाभ प्राप्त किया था।[3] पिता के आचार्यत्व में ही देवों, असुरों और मानवों की शिक्षा सम्पन्न हुई थी।[4] पिता स्वयं गायत्री उपदेश द्वारा ज्ञानारम्भ कराता था। यह संस्कार पहले मौखिक स्वीकृति मात्र था।[5]

**चरक**

शतपथ ब्राह्मण में चरकों का उल्लेख हुआ है।[6] चरक विचणशील विद्यार्थी थे जो ज्ञान पिपासा को शान्त करने के लिए एक स्थान से दूसरे स्थान को जाते रहते थे। शङ्कराचार्य[7] ने चरक के दो अर्थ किये हैं 1. अध्ययनार्थ विचरण करने वाले तथा 2. यज्ञसम्पादनार्थ अध्वर्यु। प्रस्तुत प्रसङ्ग में चरक का अर्थ विद्यार्थी ही समीचीन प्रतीत होता है। प्रतीत होता है कि साधारण शिष्य चरक कोटि में नहीं आते थे। विद्वान तथा सुशिक्षित जनों का अटनशील वर्ग ही चरक था।[8]

**विनय**

विनय का साम्राज्य जैसा ब्राह्मणों और उपनिषदों में परिलक्षित होता है, वैसा शिक्षा के इतिहास में अन्यत्र दुर्लभ है। उसका कारण यह है कि इस युग में यदि किसी वस्तु की प्रतिष्ठा हुई है तो विद्या की ही है। विद्या से विनय की प्राप्ति होती है।[9] मानव मूल्यों में विनय का स्थान सर्वप्रथम है। देव, मनुष्य और असुर विभिन्न स्वभाव के होते हुए भी विद्या प्राप्ति हेतु आचार्य के निकट विनम्र भाव से समुपस्थित हुए थे।[10] उनको पूर्ण रूप से परिज्ञान था कि पिता प्रजापति बिना

1. शतपथब्राह्मण 14/2/1/20
2. शतपथब्राह्मण 14/3/6/1
3. शतपथब्राह्मण 14/2/1/15-16
4. शतपथब्राह्मण 14/6/2/1
5. शतपथब्राह्मण 14/5/2/1
6. शतपथब्राह्मण 14/6/2/6
7. मद्रेषु चरकाः पर्यव्रजाम। बृहदारण्यकोपनिषद् 3/3/1
8. चरका अध्ययनार्थ व्रतचरणाच्चरका अध्वर्यवो वा, शाङ्करभाष्य-बृह0उप0 3/1/1
9. वैदिक इण्डेक्स, प्रथमखण्ड, पृष्ठ 258, हिन्दु सभ्यता पृ0 109
10. विद्या ददाति विनयं विनयाद्याति पात्रताम्। हितोपदेश-6

विनयशीलता के समुचित ज्ञान का वितरण नहीं करेंगे। जनक सदृश राजन्य भी महर्षि याज्ञवल्क्य के ज्ञान से प्रभावित होकर विदेहों के सहित समर्पित होने में कोई सङ्कोच नहीं करते।[1] शिष्यों की उच्छृङ्खल मनोवृत्ति कहीं भी दिखाई नहीं पड़ती। ज्ञानोपलब्धि हेतु ब्राह्मणों ने अपने स्वत्त्व की अवहेलना करते हुए क्षत्रियों के आगे अपने को समर्पित करने में कोई सङ्कोचानुभूति नहीं की थी।[2]

## शुल्क

आचार्य कुलों में शिष्यों से अध्यापन के निमित्त कोई शुल्क नहीं लिया जाता था।[3] समित्पाणि होकर जिज्ञासु आश्रमों में जाया करते थे।[4] आचार्यो को बड़ी-बड़ी दक्षिणाएँ दी जाती थी। इन दक्षिणाओं से यह अर्थ असत् होगा कि शिक्षा के निमित्त इनकी अपरिहार्यता थी। विद्योपार्जन के अनन्तर शिष्य उन्हें उपहार अवश्य देते थे। ऐसी मान्यता थी कि आचार्य शिष्यों को बिना उपदिष्ट किये उससे धन नहीं ले सकते थे।[5] राजा जनक[6] और जनश्रुति[7] द्वारा प्रदान किये जाने वाले उपहारों से निस्सन्देह यह प्रतीत होता है कि आचार्य कुलों को सम्पन्न बना देने का प्रयास राजन्यों द्वारा किया जाता था। इन उपहारों को वर्तमान के शुल्क से समीकृत (मिलाना या तुलना) करना असङ्गत होगा।[8]

## शिक्षा और समाज

ब्राह्मणों और उपनिषदों में शिक्षा के प्रति समाज बड़ा जागृत दिखाई देता है। स्वाध्याय और प्रवचन समाज के प्रत्येक घटक के लिए अनुष्ठेय था।[9] इस तरह शिक्षा को जीवन का अविभाज्य अङ्ग बनाकर समाज को बौद्धिक दृष्टि से ऋषियों ने बड़ा ही सम्पुष्ट किया था। कोरी आस्था और विश्वास से जी पाना उस युग में सम्भव न था। वस्तुतः यह युग आलोचना प्रधान था। सर्वत्र कर्मकाण्ड व्याप्त था। फिर भी प्रत्येक वस्तु की आध्यात्मिक व्याख्या भी होती थी। अतः शिक्षा की अनिवार्यता होने के कारण पिता पण्डित-पुत्र और पण्डिता-पुत्री की आकाङ्क्षा करते थे।[10] तत्कालीन समाज में शिक्षा प्राप्ति के लिए व्यग्रता अबाल-बृद्ध-वनिता में दिखाई देती है। स्त्रियों का

---

1. शतपथब्राह्मणम् 14/5/2/1
2. शतपथब्राह्मणम् 14/4/1/6
3. शतपथब्राह्मणम् 14/2/1/15
4. बृहदारण्यकोपनिषद् एक अध्ययन- डॉ.मनुदेव बन्धु, समाज दर्शन।
5. प्रश्नोपनिषद् 1/1
6. याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति/शतपथ 14/4/1/6
7. शतपथब्राह्मणम् 14/4/1/6
8. मन्त्रब्राह्मणम् 4/2/1
9. बृहदारण्यकोपनिषद् एक दार्शनिक एवं सांस्कृतिक अध्ययन-डॉ0 मनुदेव बन्धु, समाज दर्शन।
10. तैत्तिरीयोपनिषद् 1/9/1

भी शिक्षा से घनिष्ठ सम्बन्ध था। गार्गी याज्ञवल्क्य को विवाद हेतु खुला आमन्त्रण देती है।[1] मैत्रेयी आत्मज्ञान प्राप्ति हेतु अपने पति याज्ञवल्क्य को प्रोत्साहित करती है।[2] इस प्रसङ्ग में नारी शिक्षा की पराकाष्ठा का द्योतन होता है।

## शिक्षा और राज्य

शिक्षा के विकास में राज्य का महत्त्वपूर्ण स्थान था। राजा यज्ञ के अवसर पर सम्मेलन आयोजित करते थे। जिनमें अनेक विद्वान् सुदूर प्रान्त से आकर भाग लेते थे।[3] इन सम्मेलनों में शास्त्रार्थ होता था। यह शास्त्रार्थ ब्रह्म विषयक- 3. होता था। इसे ही ब्रह्मोद्य[4] के रूप में वर्णित किया गया है। राजाओं की परिषद् या समितियाँ[5] स्वयं को ज्ञान चर्चा में लगाती थी। इन राज्य संस्थाओं में कहीं भी ज्ञान के अतिरिक्त कोई अन्य विषय विचारार्थ प्रस्तुत नहीं हुआ है। जनक के यहाँ अधिकांश आचार्य उपस्थित होते थे। इसका कारण यही था कि वे प्रभूत मात्रा में उन्हें उपहार समर्पित करते थे। काशीराज अजातशत्रु को इसी बात के ऊपर ईर्ष्या होती थी,[6] वह भी चाहता था कि मेरे यहाँ भी बहुत से ब्राह्मण या आचार्य आवें। इस प्रकार राजाओं के द्वारा विद्वानों का बड़ा सम्मान होता था।

## पर्यावरण

पर्यावरण का अर्थ अपने चारों ओर का वतावरण होता है। जिसमें हम जीते हैं, सांसलेते हैं, भोजन करते हैं, जल पीते हैं, अपने आपको स्वस्थ और सम्पन्न बनाते हैं। यह पर्यावरण स्वच्छ और निर्मल हो, इसके लिए वर्तमान समय में भारत के केन्द्र और राज्य सर्वकारों के द्वारा अनेकों प्रयास हो रहे हैं। वर्षा से अन्न उत्पन्न होता है। अन्न खाकर हम सब भी जीवित रहते हैं। बिना वर्षा के जीने की कल्पना नहीं की जा सकती। शतपथ ब्राह्मण में लिखा है -

**अग्नेर्वै धूमो जायते धूमादभ्रम् अभ्राद्वृष्टिः।**
**अग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति॥**[7]

ऋग्वेदादिभाष्यभूमिका में महर्षि दयानन्द जी ने इसकी व्याख्या इस प्रकार की है- जो होम करने के द्रव्य अग्नि में डाले जाते हैं, उनसे धुआँ और भाप उत्पन्न होते हैं, क्योंकि अग्नि का

---

1. शतपथब्राह्मणम् 14/6/4/17-18
2. शतपथब्राह्मणम् 14/3/8/2
3. येनाहं नामृतास्यां किमहं तेन कुर्या यदेव भगवन् वेद तदेव मे ब्रूहि इति। शतपथ ब्राह्मण 14/2/4/3
4. शतपथब्राह्मणम् 14/3/1/1
5. शतपथब्राह्मणम् 14/3/8/11
6. शतपथब्राह्मण 14/6/2/1
7. शतपथब्राह्मण 14/2/1/1

यही स्वभाव है कि वह पदार्थो में प्रवेश करके उनको भिन्न-भिन्न कर देता है। फिर वे हल्के हो कर वायु के साथ ऊपर आकाश में चढ़ जाते हैं। उनमें जितना, जल का अंश है वह भाप कहलाता है। और जो शुष्क है वह पृथ्वी का भाग है, इन दोनों के योग का नाम धूम है। वे परमाणु मेघ मण्डल में वायु के आधार से रहते हैं। फिर वे परस्पर मिल के बादल हो के उनसे वृष्टि, वृष्टि से औषधि, औषधि से अन्न, अन्न से धातु, धातुओं से शरीर और शरीर से कर्म बनाता है। वृष्टियज्ञ में शरीर वृक्ष के जड़, समिधा एवं फलों की आहुति का विधान किया गया है।[1]

पौर्णमास इष्टि में दीक्षित होने वाला पुरुष आहवनीय तथा गार्हपत्य अग्नियों के बीच पूर्व दिशा की ओर खड़ा होकर जल का स्पर्श करता है। इस जल के स्पर्श का क्या कारण? जल मेध्य होता है, अर्थात् यज्ञ के लिए उपयोगी होता है। झूठ बोलने वाला व्यक्ति यज्ञ करने के लिए उपयुक्त नहीं होता है। अतः जल के स्पर्श से वह पापों को दूर कर मेध्य बनता है। जल पवित्र होता है। अतः जल के स्पर्श करने से व्यक्ति पवित्र होकर दीक्षित होता है। इसलिए जल को स्पर्श करता है।[2]

यज्ञ से पर्यावरण शुद्ध होता है। सभी प्रकार के रोगों की निवृत्ति होती है। समस्त कर्मों में यज्ञ ही श्रेष्ठतम् माना जाता है।[3] ब्राह्मण ग्रन्थों में यज्ञ की इतनी महिमा है तथा आदर है कि विश्व का सबसे श्रेष्ठ देवता प्रजापति भी यज्ञ का ही रूप है।[4] विष्णु का प्रतीक यही यज्ञ है-'यज्ञो वै विष्णुः'। आकाश में दैदीप्यमान आदित्य भी यज्ञरूप है।[5] समस्त कर्मों में श्रेष्ठतम होने के कारण इस विश्व में यज्ञ ही परम आराध्य वस्तु है। जगत् के जितने पदार्थ हैं, यहाँ तक कि देवों का जनकरूप प्रजापति भी यज्ञ के ही आध्यात्मिक प्रतीक हैं। यज्ञ से ही सृष्टि हुई है।[6] अग्निहोत्र के अनुष्ठान से प्राणी अपने सब पापों से छूट जाता है।[7] पर्यावरण शुद्धि में यज्ञ और शिक्षा का अतुलनीय योगदान है। भारत के नागरिकों में पर्यावरण के प्रति जागृति होनी चाहिए। सभी छोटे बढे शैक्षणिक संस्थानों में पर्यावरण शुद्धि की शिक्षा दी जानी चाहिए।

---

1. कृष्णयजुर्वेदीय तैत्तिरीयसंहिता 2/4/7-10 तथा काठकसंहिता 11/9-10/21-32
2. शतपथब्राह्मण काण्ड-5 अध्याय 3
3. अमेध्यो वै पुरुषो यदनृतं वदति, तेन पूतिरन्तरतः। मेध्या वा आपः। मेध्यो भूत्वा व्रतमुपायानीति पवित्रं वा आपः। पवित्रपूतो व्रतमुपायानीति तस्माद्वा अप उपस्पृशति।। शतपथब्राह्मण 1/1/1/1
4. यज्ञो वै श्रेष्ठतमं कर्म। शतपथब्राह्मण 1/7/3/5
5. एष वै प्रत्यक्षं यज्ञो यत् प्रजापतिः। शतपथब्राह्मण 4/3/4/3
6. स यो यज्ञोऽसो आदित्यः। शतपथब्राह्मण 14/1/1/16
7. सर्वस्मात् पाप्मनो निर्मुच्यते य एवं विद्वान्नग्निहोत्रं जुहोति। शतपथब्राह्मण 2/3/1/6

